Vishwambhar Sharma

Smriti'saarodhwar

स्मृति सारो द्धार

Sanskrit

Paper : Printed

Sambat 1961 (114 years old)

78 folio

13.2"x14.4"

Complete



श्रीगणेशाय नमः ॥

# ॥ स्मृति सारोद्धारः ॥

स्वस्ति श्रीमच्चक्रनारायणेत्यादिविविधविरुदावलीविरा-
जमान मानोन्नत मर्य्यादासागर श्रीमन्महाराजमध्यप-
ल्ली (मभौली) स्वर श्री १०८ युत भीममल्लक्षितीशात्मजल-
डुपम श्री १०८ युत महाराजमल्ल नारायणास्मभर्तुराश्रितैः
शारावारदेशमण्डलान्तर्गत पिराडी ग्राम निवासि-
विद्वद्वर त्रिपाठ्युपाख्य विश्वम्भर शर्म्मभिः-

सङ्कलितः

सद्दानीम्

तत्कुल कमल दिवाकर तदुपम श्री १०८ युत महाराज
खड्गबहादुर मल्ल देवानां धर्म्मपत्न्या श्रीमहाराज्ञ्यासक
ललोकोपकाराय वितरणाय च स्वकीय मुद्रणालये-
शिलाक्षरैः सम्मुद्र्य प्रकाशितः

श्रीसम्वत् १९६१

श्रीचण्डिका प्रसादाख्यया

वेणीराम विपुल शीलायन्त्रालय मुद्रीतम बनारस ॥

॥ श्रीः ॥

# श्रीगणेशाय नमः

# अथ स्मृति सारोद्धार प्रारम्भः

कृपा शालि जगत्पालि धनुः पाणिस्त वारिणा यत् स्फुरत्सीतं घन स्फीतं श्यामधा
मनमा मलत् ॥ १ ॥ प्रभुर्यः कौशल्या हृदय दृढ शल्या पहरणो गभीर श्चाञ्च
ल्यान धिकरण बाल्यादि रपियः वयं पाल्या स्तस्य भवल तर कल्या हित भया
दहल्या कल्याणा कर चरण रेणो र्भगवतः ॥ २ ॥ अहे भवत्तः स्मृति सार
रं भसां विलो डने स्योह विमन्द मन्दरः ॥ सुधार्थं निर्णीति कृते कृपा निधि
र्भवे त्सहायो मम पार्थ सारथिः ॥ ३ ॥ पीताम्बरं रुचिर कुण्डल भव्य गण्ड
मापीन वक्ष समुदार किरीट हारं ॥ स्मेरान नं नलिन नेत्रम शेष सिद्धै वन्दे
प्रियं सुदिरमे हुर मिन्दिरायाः ॥ ४ ॥ अस्मिन्काले जनान्वीक्ष्य साल्प सान-
ल्पमेधसः ॥ विश्वं भरेण धर्माणां सारोद्धारो विधीयते ॥ ५ ॥ अथ विधि
बोधित कर्म कलापस्य पर्याय कृतपाञ्चदाधारकृतया प्रथमं तिथयो निर्णी
यते ॥ विधिरत्यन्तम प्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्तौ परि-
सङ्ख्येति गीयते ॥ अत्यन्तम प्राप्तौ सत्यां यः प्रापयति प्रवर्त्तयति स विधि
स्त्रिविधः नित्य विधि र्नैमित्तिक विधिः काम्य विधिश्च ॥ नित्य विधिर्यथा

॥ अहरहः सन्ध्यामुपासीत नैमित्तिक विधिर्यथा पुत्रे जाते ना
न्दीमुखान् पितृन्यजेत् काम्य विधि र्यथा ज्योतिष्टोमेन स्वर्ग्ग
कामोयजेतेति ऋतौ भार्य्यामुपेयादिति नियम विधिः पञ्च प
ञ्च नखा भक्ष्या इति परि सङ्ख्या आवश्यकत्वे नियम विधेः
परि सङ्ख्यातो भेदक मिति दिक् पुन द्वितीयो विधिः प्रवर्त्त
को निवर्त्त कश्चेति प्रवर्त्त को यथा दर्शे स्नात्वा पितृभ्यो दद्
यात्कृष्ण तिलोदकम् अन्नंच विधिवद्द्या त्सन्ततिस्ते-
नवर्द्धत इति ॥ निवर्त्त को यथा० ॥ अमावास्या
यां नाध्यापयेत् नाधीयीत नछिन्द्यादार्द्र दारु नाद्यादन्न म्य
रसेति ॥ तथा ॥ अमावास्यायां नगच्छेत्स्त्रीस काला मपि-
स्त्रियम् तैलं नच स्पृशेदार्द्र दन्ता दींपूर्व नखरादयेदिति ए-
वमुभय विध्युक्त कर्म कला पाधि करणत्वे न तिथि निर्णय-
स्समुचितः निर्णयो नाम परस्पर विरुद्धार्थानां वाक्यानां विरोध
परिहारेणार्थाव धारणम् ॥ उक्तंहि ॥ तत्त्वे विप्रति
पन्नानां वाक्या नामि तरे तरम्। विरोध परि हारोऽत्रनिर्णय-
स्तत्त्व दर्शनम् सनिर्णय स्स्मृति तो भवति स्मृतीनां च वेद मूल
कत्वेन प्रामाण्यं नस्वतः ॥ तदुक्तं भट्ट पादैः ॥ पारत
न्त्र्यात्स्वतो नैषां प्रमाणत्वा व धारणा। अप्रामाण्य विकल्पस्तु द्र
ढिम्नैव विहन्यते नतु स्मृतीनां न प्रामाण्य निश्चयः पौरुषेयत्वे
नवक्तृ दोष शङ्का कलङ्कात् नोदनात्मक वेदस्या पौरुषेयत्वात्स्व
तः प्रामाण्यम् औत्पत्तिक सूत्र पर्यालोचने न तत्रौत्पत्तिक पदे
नसम्बन्धस्य नित्यत्वं निर्द्दोषत्वं च प्रतिपादयतापौरुषेयत्व निराक
रणात् नच भाष्य कृता प्रवर्त्तक ॥ ७ ॥ ८ ॥

नस्य प्रामाण्याभिधानातत्वात् स्मृतीनामपि प्रामाण्यमितिवाच्य-
म्॥ भाष्यपर्यालोचनया प्रवर्त्तक बचनस्यैव प्रमाणाया वधार-
णात्॥ नश्रुति स्मृति साधारणातादृश बचनमात्रस्य। तस्मादौ-
त्पत्ति कत्वेन पुरुष दोष निराकरणाद्नुपलब्धार्थत्वाच्चा पौरुषे-
य नोदनायाः प्रामाण्यं नसवक्तृनोदनायाः यदुक्तम्॥ औत्पत्तिक
गिरादोषः कारणस्य निवार्य्यते। अबाधाव्यतिरेकेण स्वतस्तेन
प्रमाणानामर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा इति॥ स्मृ
तीनां पौरुषेयत्वेनैवं रूपताभावः तथाचपारमार्षसूत्रम्॥ धर्म-
स्य शब्द मूलत्वाद शब्दमनपेक्षं स्यादिति भाष्यंच शब्द मूलको
धर्म इत्युक्तम्। नोदनालक्षणार्थो धर्म इति। अतो निर्मूलत्वान्न
स्मृतीनां प्रामाण्यम्। नच प्रत्यक्ष मूलत्वेन प्रामाण्यम् धर्माध-
र्म योस्तद प्रवृत्तेः नच श्रेयस्कर भाष्येद्रव्य क्रियागुणानामपि
धर्म कथनात्प्रत्यक्षगम्यत्वं फलसाधन त्वरूपेण धर्मत्वात्फल
स्यच जन्मान्तर भावित्वाद्धर्मरूपेण प्रत्यक्ष विषयत्वासंभवात्॥
यदाह वार्तिक कृत।। अष्टका दिस्वर्गादि साध्य साधन भावम्प्र-
त्यक्षतादीनितान्नमृत्॥नीति प्रत्यक्ष मूलकत्वाच्चानुमानादिकम
निरस्तम् नचास्तुवेद मूल कत्वेन प्रामाण्यम् अनुपलंभात्। नह्य-
नुपलब्ध मानो वेदः स्वप्रमेयं प्रतिपादयितुमीष्टे। नचायं प्रत्य-
क्षेणोपलभ्यते। अनुचार्य्यमाणत्वात्। उच्चार्यमाणत्वेवास्मृति
प्रणायन वैयर्थ्यात्। नाप्युच्छन्न शाखामूलत्वमति प्रसङ्गात् पाख-
ण्ड स्मृतीनामपि प्रामाण्य प्रसङ्गात्। मृतसाक्षिव्यवहारवत्।
यथामद्व्यवहारंयो जानातिस्ममसाक्षीमृतः तथामन्मतं प्रलीन
शाखायामस्तीति पाखण्डोपिस्वमत प्रामाण्यं निश्चाययेदिति

नापिनित्यानुमेयश्रुतिमूलत्वम्। अन्धपरंपरापातात्॥ नचविकी-
र्णशाखामूलत्वंस्मृतिप्रणाय नवैयर्थ्यात्। विकीर्णशाखानांसंवर-
णादेवक्रियासिद्धेरतः स्मृतिप्रामाण्यं विरहिमानोरथिकमैथुनमनु
करोतीति। अत्रोच्यते वेदप्रामाण्याभ्युपगन्तॄणां मन्वादीनामष्टका
दिषु धर्मत्वस्मरणांस्वकृतस्मृतेर्वेदमूलकत्वं विनानुपपन्नं। कथम
न्यथावेदस्यैवप्रामाण्यम्। वेदमूलकस्यैवेति मन्वादयोनिश्चिनुयुः
दूरे वेदामूलकस्मृतिप्रणायनंतेषांकथमनुच्चारितानां मूलत्वोपपत्ति
रितिचेत्॥ उच्चार्यन्त एवस्मृतिमूलभूताः श्रुतयः संप्रत्यपिकेचिद्ध-
र्माः कस्यांचिच्छाखायामन्येतदन्यस्यामिति शाखान्तराध्यायिभिः
शाखान्तरस्थानामनुपलंभः एकस्यामपिशाखायांकेचिद्धर्माःक-
चिदुक्ताः केचिदादावन्तेचकेचिदिति विप्रकीर्णानामनुसंधानम
न्दधीभिर्दुष्करञ्चमेणैकत्रोपसंहारार्थं स्मृतिप्रणायनमितियुक्तम
वधारयामः यदुक्तं भट्टपादैः शाखानां विप्रकीर्णत्वात्पुरुषाणां प्र-
मादतः नानाप्रकरणस्थत्वात्स्मृतेर्मूलं नदृश्यतइतिसम्प्रदायोच्छेद
भीतेर्वेदवाक्यान्येवसंहृतानिविशिष्टानुपूर्व्याव्यवस्थितो हिस्वाध्या-
योऽध्येतव्यइतिश्रूयतेस्मार्त्तश्चाचारः कश्चित्कस्यांचिच्छाखायां त
त्रयदितावन्त्येववाक्यान्युद्धृत्याध्याप्येयुस्तदाक्रमान्तत्वात्स्वाध्याय
विरोधः स्यादितियद्वै किंचिन्मनुरवदत्तद्भेषजमभवदितिश्रुत्याम
नुवचनस्याहृतत्वात्सुतरांप्रामाण्यमेवंसदाचारादीनामपिश्रुतिमू-
लकत्वेन प्रामाण्यमवधार्यम्॥ विवेकस्तु॥ आचारात्तुस्मृ-
तिंज्ञात्वास्मृतेश्चश्रुतिकल्पनम् तेन द्व्यन्तरितं तेषां प्रामाण्यं विप्रकृ
ष्यतइति अलमधिकेनेति मन्वादिशास्त्राणां तु वेदमूलत्वे निरपे
क्षप्रमाणानामपि परस्परसाकांक्षत्वमन्यथाक्वचिदधिकाङ्गकर्म

विधिः कश्चिन्न्यूनाङ्गकर्मविधिरिति परस्परविरोधाद् प्रामाण्यप्रसंगः सर्वशाखाधिकरणन्यायेन सर्वत्र विधेयस्य कर्मण एकत्वे प्रधानाविरोधान्नाप्यङ्गविरोधः यस्मिन्शास्त्रे न्यूनाङ्गविधिस्तच्छास्त्रं स्वोक्तेनिरपेक्षप्रमाणमित्युक्तेऽशेशास्त्रान्तरमपेक्षत इति नात्यन्तनिरपेक्षता अत एवाविरोधान्नाप्रामाण्यम्॥ **उक्तं च**॥ यन्नाम्नातं स्वशाखायां परक्याम विरोधियत् विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि कर्मवदिति संक्षेपः॥ **अथ द्वैधपरिहारः**॥ श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसीति ननु तथापि कालनिर्णयो व्यर्थः कर्मण एव निर्णेयत्वात् यदुक्तम् कालेहि कर्म चोद्यते न कर्मणा काल इति चेन्न पौर्णमास्यां पौर्णमास्यां यजेतामावास्यायाममावास्यायां यजेत इत्यादि श्रुत्या कालकर्मसम्बन्धस्य विधेयत्वप्रतिपादनात्॥ **यदाह गार्ग्यः**॥ तिथिनक्षत्रवारादि साधनं पुण्यपापयोः प्रधानगुणभावेन न स्वातंत्र्येण ते क्षमा इति अथ कालनिर्णये सम्वत्सरस्य मुख्यत्वात्सम्वत्सरो निर्णीयते॥ **ब्रह्मसिद्धान्ते**॥ चान्द्रसावनसौराणां मासानां तु प्रभेदतः चान्द्रसावनसौरास्तु त्रयः सम्वत्सरा अभी यद्यपि नाक्षत्रोऽपि मासस्तथापि नाक्षत्रो नाब्दो गण्यते तथा च हेमाद्रिसिद्धान्तकारिका तत्र नामास जमास षट्कयुगतस्त्वब्दीभमानं विनेति ज्योतिश्शास्त्रे संवत्सरस्य पञ्चविधत्वमुक्तम्। सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेणास्युः मातुलयातो तुलादिमलवराडाश्च वत्सराः पंच। **तदुक्तम्**। चान्द्रः सम्वत्सरो ज्ञेयस्तिलकादिव्रतेषु च सौरस्य तु सुजन्मादि व्रतादावुपयोगिता॥ **सावनस्य तु**॥ सत्रादावुपयोगः प्रकीर्त्तितः नक्षत्रबार्हस्पत्योस्तु ज्योतिश्शास्त्रोपयोगिता॥ **स च द्वादशमासात्मकः**॥ द्वादशमासाः सम्वत्सर इति

श्रुतेः मलमासपाते तु त्रयोदशमासाः स्युः तत्र षष्टिदिनात्मक एकैकश्च मासः श्रौत द्वादशमासतोपपत्त्येगणनीयः॥ उक्तं हि॥ षष्ट्या तु दिवसैर्मासः कथितो बादरायणैरिति अयनं द्विविधम्। दक्षिणोत्तरभेदात ॥तत्रायने॥ सौरमेव ऋतुत्रय परिमितं च तथा च संग्रहः सौरं तु त्रितयं प्रदिष्टमयनमिति। अयनोपयोगश्च सत्यव्रतेन दर्शितः देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ दक्षिणायनेत्वसुसे कुर्वन्न तत्फलमवाप्नुयात्। ऋतुर्मासद्वयात्मकः स च षड्विधो वसंतादिः ऋतुः सौरश्चान्द्रोऽपि षोढैव गणायः षड्वा ऋतव इति श्रुतेः यत्तु द्वादश मासाः पंचर्त्तव इति श्रूयते तन्न्यथा जानुमंचोपयोगित्याहेमन्तशिशिरयोरकीकरणाभिप्रायेण पंचर्त्तवो हेमन्तशिशिरयोस्समासेनेति श्रुतेः उपयोगश्च वसन्ते ब्राह्मण मुपनयीतेत्यादिश्रुतिसिद्धिः चान्द्रवसस्य चैत्र शुक्लप्रतिपद्युपक्रमः चान्द्रवसन्तस्यापि तथैवेति सौरयोरवसन्तयोस्तु विकल्पेन मीनमेषावुपक्रमौ कल्पनीयौ॥ तदुक्तं संग्रहे॥ सौरश्चान्द्र इति द्विमासज ऋतुर्द्वेधा वसन्तादिकश्चान्द्रोऽब्दो मधुशुक्लप्रतिपदारंभो वसन्तस्तथा चैत्रादब्द वसंतयोर विजयोर्वा मीनमेषौ मुखमिति मासश्च चतुर्विधः प्रोक्तः सावनादिप्रभेदतः त्रिंशद्दिनात्मकस्तत्र सावनः परिकीर्त्तितः एकस्मात्संक्रमादासंक्रांति सौरोऽभिधीयते शुक्लपक्षादि कृष्णान्तश्चान्द्रः स्यादन्यथापि वा। सर्वनक्षत्रभुक्त्या तु नाक्षत्रो मास उच्यते। उपयोगश्च सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः आब्दिके पितृकार्ये वा चान्द्रो मासः प्रशस्यते शुक्लकृष्णप्रभेदेन पक्षोऽपि द्विविधो मतः सावनादिषु भेदेन पक्षश्च द्विविधो मतः सावनादिप्रभेदेन दिवसोऽपि चतुर्विधः। नाडीषष्टिमितस्तत्र सावनो दिवसः स्मृतः त्रिंशांशमासश्चार्कराशेर्दिवसः सौर उच्यते चान्द्रस्तु तिथ्यवच्छिन्नो भावर्धिसमूः स्मृतः॥ अथ मुहूर्त्तस्वरूपं गार्ग्यः॥ अक्षिपक्ष्मपरिक्षेपोनिमिषः परिकीर्त्तितः द्वौ-

निमेषौ त्रुटिर्नाम द्वौ त्रुटी तु लवः स्मृतः द्वौ लवक्षण इत्युक्तः काष्ठाप्रो
क्ता दशाक्षणाः त्रिंशत्काष्ठाकला प्रोक्ता कला त्रिंशन्मुहूर्त्तकः ते
तु त्रिंशदहोरात्र इत्याह भगवान हरः। महाभारते नाडीद्वयं मुहूर्त्त
स्तु ते पंचदश वासरः एवं रात्रिस्तथा पक्षमासस्त्वयनवत्सराः कर्ष
णाभ्यधिकैः षड्भिः पलैस्ताम्रस्य भाजनम् त्रिंशदङ्गुलविस्तार
मुच्छितं चतुरङ्गुलम् स्वर्णमाषेण कृत्वा च चतुरङ्गुलकाष्ठिकाम्
मध्यभागे तया विद्धं नाडिका घटिका स्मृता तद्रन्ध्रेणाम्भसा पात्रं या
वत्कालेन पूर्यते स कालो नाडिका तस्याः षष्ठिभागो विनाडिका। स्वर्ण
माषादिमानं चागस्त्येनोक्तम्। यवः स्यात्सर्षपैः षड्भिर्गुंजा चस्या
त्त्रिभिर्यवैः गुंजाभिः पंचभिश्चैको माषकः परिकीर्त्तितः भवेत्षोड
शभिर्माषैः सुवर्णस्तैः पुनः स्मृतः पलं सुवर्णाश्चत्वारः पंच वापि
प्रकीर्त्तितम्। कर्षस्तु पलस्य चतुर्भागः स एव सुवर्णोऽपि ॥ तदु
क्तं त्रिकाण्डाम् ॥ मानन्तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमा
षकः ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयमिति। इति सस्वत्स
रादिनिरूपणम् ॥ अथैकभक्ताद्युपयोगितया दिवसभागो निरूप्य
ते। तत्र स्कान्दे द्विधा विभाग उक्तः ॥ आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्ण
स्तथा परः आवर्त्तनं मध्यंदिनम् ॥ शातातपोऽन्हस्त्रैविध्यमाह पूर्वाह्णो
मध्यान्होऽपराह्ण इति पूर्वाह्णो वै देवानां मध्यान्हो मनुष्याणां अपराह्णः
पितॄणामिति चतुर्द्धाऽपि पूर्वान्हः प्रहरः सार्द्धो मध्यान्हः प्रहरात्मकः
अपराह्णः ईदृग्या मात्मा सायान्हस्तुर्ययामक इति। व्यासेन पंचविध
तान्ह उक्ता मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः मध्यान्हस्त्रिमुहूर्त्तः
स्यादपराह्णश्च तादृशः। सायान्हस्त्रिमुहूर्त्तः स्यात्सर्वकर्मसुगर्हितः
शातातपेयी श्रुतिरपि पंचविधत्वमाहान्हः ॥ आदित्यस्त्वेव ऋतवो

देवोदैत्यघवसन्तोयदासंगवोऽपग्रीष्मोयदामध्यंदिनोऽथवर्षायदा पराह्णोप्यथशरद्देवास्तमेत्यथहेमन्तइति। माधवीयेतुपंचदशधा विभागोदर्शितः॥ **गाङ्गवः** ॥रौद्रश्चैवचश्चमैत्रश्च तथाचारभटः स्मृतः सावित्रश्च जयन्तश्चगांधारःकुतपस्तथा रोहिणश्च विरिंचिश्च विजयो नैऋतस्तथा। महेन्द्रोवरुणश्चैवभागाःपंचदशः स्मृतः एषांवि- भागानांमध्येक्कचित्कश्चिदुपयुज्यते॥ राजमार्त्तण्डेतुश्रुत्यनुगृही- तत्वात्पंचधाविभागस्यैवमुख्यत्वमुक्तम्॥ अथ वृद्धि साम्य क्षयाहिन द्वयव्यापितिथौविहितंकर्म कुत्रकार्यमिति सन्देह निर्णयार्थमाह गो- भिलः पर्वोदयस्तथा हिंसात्रिविधं तिथिलक्षणम् धर्मं वक्ष्यादेव तिथि स्त्वेधाविवर्त्तते इति। पर्वोदिन द्वयेपि तिथ्योः साम्यमदर्पः पूर्व तिथ्यपे- क्षयाऽग्रिमतिथेरधिकत्वम् हिंसा पूर्वपूर्वापेक्षयाऽग्रिमाग्रिमतिथेर्न्यू- नत्वम् तत्रनिषेधः कालमात्रापेक्षः विधिस्तु पूज्यतिथि विषयः तिथेः पूज्यत्वंनाम पूर्व विद्धात्वेन परविद्धात्वेनवाविहितत्वम्॥ **तदाह गार्ग्यः**॥ निमित्तंकालमादायवृत्तिर्विधि निषेधयोः विधिः पूज्य तिथौतत्रनिषेधः कालमात्रकेति धीनांपूज्यतानामकर्मानुष्ठान यो- ग्यता निषेधस्तु निवृत्तात्मा कालमात्रमपेक्षतेतिथीनांपूज्यत्वधीर्वे- धज्ञानाधीनेति वेधमाह॥ **पैठीनसिः**॥ पक्षद्वयेपि तिथयस्तांथं पूर्वामथोत्तराम्॥ त्रिभिर्मुहूर्तैर्विध्यंति सामान्योयंविधिःस्मृतः उभय प- क्षीयप्रतिपदाद्यास्तिथयः सूर्योदयादूर्ध्वं प्र वर्त्तिनीभिः षड्भिर्नाडीभिः पूर्वतिथ्याविद्धाः स्युः एवंतिथ्यादि वर्त्तिनीभिः षड्भिरेवनाडीभि- र्घात्साया द्व्यापिनीभिरुत्तरतिथ्याविद्धाःस्युरित्यर्थः अयंचत्रिमुहूर्त्ता दिवेध उदयादूर्ध्वंपूर्वतिथ्यास्तमयात्प्राक परतिथ्येति गम्यतेसा ति- थिस्तदहोरात्रंयस्यामभ्युदितोरविः वर्द्धमानस्यपक्षस्यह्रासे तस्तम

येस्थितेतिवचनात् ॥ वृद्धवशिष्ठः ॥ यस्यां तिथावभ्युदियात्सूर्यस्त्रिमुहूर्त्तके स्नानदानजपादिभ्यस्तामेवोपक्रमेत्तिथिम् ॥ वशिष्ठः ॥ त्रिमुहूर्त्ता नकर्त्तव्या यातिथिः क्षयगामिनी त्रिमुहूर्त्तापि कर्त्तव्या यातिथिर्वृद्धिगामिनी ॥ स्कान्दे ॥ यांतिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः सातिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्तापि या भवेत् शिवरहस्ये सौरपुराणे यां प्राप्यास्तमुपैत्यर्कः सा तु चेत्त्रिमुहूर्त्तिका धर्मकृत्येषु सर्वेषु सम्पूर्णेति विदुर्बुधाः क्षये पूर्वा प्रकर्त्तव्या वृद्धौ ग्राह्या तथोत्तरातिथेस्तस्या स्त्रिक्षणा या ह्रासवृद्धीन कारणम् ॥ त्रिक्षणा यास्त्रिमुहूर्त्ता याः ॥ - स्कान्देतु ॥ तस्यास्तु त्रिमुहूर्त्ता या इति तृतीयः पक्षः ॥ अत्र हेमाद्रिः ॥ त्रिमुहूर्त्ता या ह्रासवृद्ध्योः कारणत्वं पितृकार्ये नपुनर्व्रतोपवासादिषु युग्माग्नि वाक्येन व्यवस्था करणादिति पूर्ववाक्येन सह विरोधं पर्यहार्षीत् ॥ भविष्ये ॥ व्रतोपवासनियमे घटिकैका यदा भवेत् उदये सा तिथिस्तद्वहोरात्रं पित्र्ये चापराह्णिकी ॥ पाद्मे व्रतोपवासनियमे घटिकैका यदाभवेत् उदये सा तिथिर्ज्ञेया श्राद्धादावस्तगामिनी ॥ व्यासः ॥ व्रतोपवासस्नानादौ = घटिकैका यदा भवेत् तामेव तिथिमाश्रित्य कुर्यात्कर्माणि तद्विदः ॥ वौधायनः ॥ आदित्योदय वेलायां यास्तोकापि तिथिर्भवेत् पूर्णा इत्येव मंतव्या प्रभूता नोदयं विनेति यदा दिनद्वयेप्यल्पकर्मकालव्यापिनी तदोदाहरिष्यमाणे वृद्धिह्रासादि वाक्ये युग्मादिवाक्यै र्यथायोग्यं पूर्वा परावा ग्राह्या ॥ अत्र पक्षद्वये संपूर्णतिथिसंपादितमिव तिथिस्पर्शमात्रेणापि कृतं कर्म सगुणं भवतीति ज्ञापयितुमाह ॥ देवलः ॥ यां तिथिं समनुप्राप्य उदयं याति भास्करः सा तिथिः सकला ज्ञेया स्नानदानजपादिषु विष्णुधर्मोत्तरे स्नानदानादिकर्मस्विति पाठः ॥ व्यासः ॥ उदयन्नेव सविता यां तिथिं प्रतिपद्यते सा तिथिः स-

कला ज्ञेया दानाध्ययनकर्मसु ॥ **देवलः** ॥ यां तिथिं समनुप्राप्य अस्तं याति च भास्करः सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥ **विष्णुधर्मोत्तरे** ॥ सा तिथिस्तदहोरात्रं यस्यामभ्युदियाद्रविः तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् सा तिथिस्तदहोरात्रं यस्यामस्तमियाद्रविः सा तिथिः सकला ज्ञेया ह्रासवृद्धी न कारणम् ॥ अनोदयगामितिथेः सम्पूर्णत्वकथनं परविद्धोपादेयतिथिविषयम् । अस्तकालीनतिथेः संपूर्णत्वकथनं पूर्वविद्धोपास्यतिथिविषयमिति निर्णयामोजभानौ ॥ **निर्णयामृतेतु** ॥ उदिते दैवतं भानौ पित्र्यं चास्तङ्गते रवौ द्विस्त्रिमुहूर्त्तमन्होर्या सा तिथिर्हव्यकव्ययोरिति उदयात् द्विमुहूर्त्तव्यापिन्यां पित्र्यं कर्मकार्य्यमिति । एवमुदयास्तमयव्यापिनीनां तिथीनां सामस्त्येन प्राशस्त्याभिधानात्पूर्वापरवेधोप्युदयास्तमयकालीनस्वल्पक्षीयत इति व्याख्यातम् ॥ **राजमर्त्तण्डे** तु एतच्च साकल्यमन्वादिव्यतिरिक्तविषयम् ॥ **तथा च संग्रहकारिका** ॥ मन्वादिग्रहपातवैधृतियुगादिष्वेवसत्सु क्रियानो तेषां सकलत्वमिष्टमृषिभिः सायोदयस्य त्वतः याभाभ्यंजनदन्तशुद्धिजलधिस्नानेषु तात्कालिकीत ह्रत्यारणा मृत्युजन्मसु तिथेः साकल्यमात्रापिनेति विशेषो दृश्यते ॥ **स्कान्दे** ॥ नागो द्वादशनाडीभिर्दिक्पंचदशभिस्तथा भूतोऽष्टादशनाडीभिर्दूषयन्त्युत्तरां तिथिम् नागः पंचमी दिक् दशमी भूतश्चतुर्दशी एतद्वचनं तु दिनद्वयेपि कर्मकालव्यापितिथिसंभवे द्रष्टव्यम् । उपवासविषयता तु तस्यनेष्टेति ॥ **हेमाद्रिः** ॥ कालादर्शकृतस्तु द्विमुहूर्तघटिकादिवेधं न मन्यंते । किंतु केचित् कन्यायेन त्रिमुहूर्त्तवेधप्रशंसापरमाहुस्तत्रलक्षणायार्थवादकल्पनायां च न्याय्यत्वात् कथं तत्र हीत्र विरोधपरिहारः ॥ **उच्यते** ॥ उपवासव्रतादौ तावत्त्रिमुहूर्त्ता ह्रासवृद्ध्य नादरेण प्राप्ता



तिथेस्तस्या स्त्रिक्षणायाह्रासवृद्धीनकारणमित्युक्तवचनात् त्रिमुहूर्त्ता न कर्त्तव्या यातिथिः क्षयगामिनीत्यादिवाक्यस्य श्राद्धविषयत्वम् उपवासादौ च कामात्रतिथेर्विधिप्रतिवेधयोर्ह्रासवृद्धीन कारणम् यदातुतिथे वृद्धिः साम्यं वास्यात्तदा घटिकामन्त्राप्युपवासादौ ग्राह्या यदा तिथि क्षयस्तदा नेतिसर्वमवदातम् ॥ यथा हौशनाव्याघ्रश्च। षर्वो ह्येस्तथा हिंसा त्रिविधं तिथिलक्षणाम् ॥ षर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकीति ॥ व्यासनिगमवचनम् ॥ द्वितीयादिषु युग्मानां पूज्यतानियमादिषु एको द्दिष्ट विद्धया दो ह्रास वृद्ध्यादिनोदना नियमादि ष्वित्यादिना पितृकर्मव्यतिरिक्तोपवास व्रतादि समस्त कर्मणां संग्रहः एकोद्दिष्टादीन्यनेन विवाहाद्यङ्गभूतवृद्धिश्राद्धव्यतिरिक्त श्राद्धानांच संग्रहः विघ्नश्राद्धादावित्यनेनतिथिविशेष विधेय मांगलिक श्राद्धपरिग्रहः ॥ निर्णयामृतेतु ॥ नागो द्वादश नाडीभिरिति वाक्यस्यत्तरतिथि विषयत्वमुक्तम् सामान्य विहितत्रिमुहूर्त्त वेधस्य पूर्व तिथि विषयत्वम्। चतुर्दशी पञ्चमी च तथाच दशमी तिथिः पूर्वांतिथि दूषयन्ति त्रिभिरेव मुहूर्त्तैरिति कौर्मवचनादिति ॥ नतु दशमी पंचदशनाडीभिरेकादशीं विध्यतीति यदुक्तंतन्न विष्णुपुराण स्मृतिवाक्याभ्यां विरुद्धम् ॥ तेवाक्येयथा ॥ अरुणोदयकालेतु दशमी यदि दृश्यतेपापमूलं तदाज्ञेयमेकादश्या मुपोषणम् ॥ तथा ॥ कलार्द्धे नापि विद्धा स्यादृशम्येकादशी यदि तदा ह्येकादशींत्यक्त्वा द्वादशीं समुपोषयेदिति चेत्सत्यम् । अरुणोदयादि सर्वप्रकार वेधस्तुवैष्णोपवासविषयः पंचदश नाडी वेधस्तुवैष्णवव्रत व्यतिरिक्त व्रतविषयः ॥ तदुक्तं निगमे ॥ सर्वप्रकारवेधोयमुपवासस्यदूषकः सार्द्धसप्त मुहूर्त्तस्तु वेधोयंबाधते व्रतमिति ॥ स्कान्दे ॥ प्रदोषव्यापिनी ग्राह्या सर्वनक्तव्रतेतिथिः उदयस्था सदापूज्या हरिनक्तव्रतेतिथिः अत्रहरि नक्तव्रतस्यौदयिक तिथौ विधानं किमु तोपवासस्येति ॥ अ-

ल्लाङ्नाथः॥ निर्णयं भोजभानौ तु विशेषः कश्चिदस्ति तथाहि ब्र- ह्मवैवर्त्तकीदृशस्तु भवेद्वैधो योगो विप्रेन्द्रकीदृशः योग वेधो ममाचक्ष्व य- यो दृष्टमुखो धरामिति प्रश्ने उत्तरम् यातिथिः स्पृशते राजन् प्रातर्क्का वलो- किनी सवेध इति विज्ञेयो योगः सूर्योदये नतु या तिथिः प्रातस्पृशत इति व्य- वहितनान्वयः॥ न चैतदेकादशी परं तद्वेध स्याकरणोदये गर्हितत्वात् तस्मा- द्यास्तिथयः पर विद्धत्वे नो पादेयास्ता उदये घटिका मात्रा अपि ग्राह्या इ- ति सिद्धम्॥ अथ पूर्वविद्धतिथिनिर्णयः॥ यदा तु युग्मदिनेऽस्तम- यात्प्राङ् दृश्यते अयुग्म दिने तूदयास्त सम्बन्धिनी तदा प्रातस्त नैकाग्राह्या युग्मदिन सम्बन्धिन्याः क्रियान र्हाया असत्कल्पत्वात्॥ यदा तु॥ युग्म दिनेऽस्तमयात्प्राक् न दृश्यते अयुग्म दिने त्वस्तात्प्रागेव समाप्यते॥ तत्र जा- बालि गौतमौ अतस्स्यु स्तिथयः पुण्याः कर्मानुष्ठान तो दिवा नक्तादिव्रत योगे तु रात्रियोगो विशिष्यत इति तस्मादस्तात्प्राक् समाप्ता प्योदपि क्वचि ग्राह्येति॥ हेमाद्रिर प्येवम् स्कान्दे॥ प्रति पत्प्रमुखाः सर्वा उदयादो दया द्रवेः सम्पूर्णा इति विज्ञेया हरिवासर वर्जिताः या तु सम्पूर्णा भूत्वा घटि- कादि वृद्ध्याग्रिम दिने यातिसा पूर्वापादेया विप्रतिषिद्ध समवाये भूयसि- स्यात्स धर्मत्व मिति न्यायात्॥ उपवासे तु सा सुतरां ग्राह्या तस्या होरात्र निः पाद्यत्वात्॥ यत्तु तिथिः सशल्या परि वर्जनीया धर्मार्थकामेषु बुधैर्मनु- ष्यैः विहीन शल्यापि विवर्जनीया पद्मप्रतान्वृद्धि सुपैति पक्षः॥ इति वच नम्॥ तदेकादशी विषयम्। सशल्या दशमी विद्धा विहीन शल्या सम्पू- र्णैकादशी यदिश्वो वृद्धि वशात् द्वितीयेऽन्हि स्वल्पापि तदा सम्पूर्णामपि त्यक्त्वोत्तरा ग्राह्या यथा मलिम्लुचः पूर्वो दैवो मासस्तथोत्तरः त्याज्या ति- थिस्तथा पूर्वा वृद्धौ ग्राह्या सदोत्तरेति वचनात् इति दिक्॥

# श्री विश्वंभरविहिते स्मृतिसारोद्धार संज्ञके ग्रन्थे ॥ सामान्यसमय निर्णय न मागात्प्रथमोद्धारः ॥

## अथैकभक्तादिव्रतानां स्वरूपं कालश्च निरूप्यते ॥

तान्येकभक्तनक्तायाचितोपवासभेदाच्चतुर्द्धा तत्रैकभक्तलक्षणम् ॥ स्कान्दे ॥ दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ॥ एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि एतच्चैकभक्तव्रतं मध्यान्हव्यापिन्यां तिथौ कार्य्यम् ॥ स्मृतिसंग्रहे ॥ मध्यान्हव्यापिनी सा स्यादेकभक्ते सदा तिथिः ॥ बोधायनः ॥ उदये तूपवासस्य नक्तस्यास्तमये तिथि मध्यान्हव्यापिनी ग्राह्या एकभक्तव्रते तिथिः मध्यान्हस्य षड् घटिकात्मकत्वे नाग्रिम घटिकात्रये एकभक्तं कार्य्यम् । दिनार्द्धसमयेऽतीते इति वचनात् ॥ हेमाद्रिणा तु ॥ मध्यान्हान्त्यदले त्रिभाग दिवसे स्यादेकभक्तव्रतमिति त्रिधा विभागोऽन्हः प्रोक्तः फलतो न विशेषः अनन्तभट्टादिभिस्तु पंचधा विभाग एव दर्शितो न त्रिधेति यदा तु पूर्वदिनापेक्षया परदिनेऽधिक मध्यान्हव्यापिनी तिथिस्तदा परदिन एकभक्तम् बहुमुख्य कर्मकाल व्यापित्वात् तिथिर्वृद्धा दर्प्यस्त्वञ्च षर्ष दर्पौ गतो पूज्या विति वचनात् कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् यो यस्य विहितः कालः कर्मणस्तदुपक्रमे विद्यमानो भवेदङ्गं नोज्झितः प्रक्रमेण तु यदा दिनद्वये मुख्य काल व्यापिनी तदा पूर्वैव ग्राह्या

तिथिक्षयेन हिंसात्वात हिंसास्यात्पूर्वं कालिकीति वचनात् यदा चैकस्मिन्दिवसे कर्मतिथि भूयसी परस्मिन्नल्पीयसीति दा भूयसी स्यात् धर्मत्वमिति न्यायात भूयसी ग्राह्या। यदा दिनद्वयेपि समा तदा परैव तिथेः साम्येन षर्वत्वादिति॥ तदुक्तं मोक्षेश्वरे॥ व्याप्नोति कर्मकालं या तिथिर्भ च दिनद्वये वेधवाक्येन निर्णीय ग्राह्या पूर्वा परापि चेति॥ अयं च स्वतंत्रैकभक्तविषयः अन्याङ्गभूतमेकभक्तं तत्तिथा वेव कार्य्यं तिथिर्ययोपवासे स्यादेकभक्ते पि सा तथेति तूपवासानुकूल्यैकभक्तविषयम्। अन्यथा मध्यान्हव्यापिन्यामेवैकभक्तमिति प्रागुक्तेन न विरोधः स्यात्॥ एकभक्तस्य चोपवासानुकूल्यं तैकादशीविषयम्॥ कौर्म्मे॥ एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत्॥ तदयमर्थः संपन्नः॥ एकभक्तं त्रिविधम्। स्वतन्त्रम् अनन्तव्रताद्यङ्गम् उपवासानुकल्पश्चेति तत्र स्वतंत्रं मध्यान्हस्य षड् घटिकात्मकत्वे नोत्तरभागे घटिकात्रये कार्यम्॥ अन्यव्रताङ्गमुख्यकालात्प्रच्युतमपि गौणकाले विधेयम्। मध्यान्हे पूजयेन्नृपेत्यनन्तव्रतीय वचनात् प्रधानपूजानन्तर्यप्राप्तेः मुख्यकालावरोधे ङ्गिगुणावरोधेताद्ध्यादिति प्रतापमार्त्तण्डीप्येवम्॥ अथ नक्ततिथिनिर्णयः नक्तं नाम दिवारात्रिव्रतम्॥ अहरनशनाद्रात्रौ भोक्तव्यमिति नियमात् दिवारात्रिव्यापिन्यामेव तिथौ कार्यम्॥ स्कान्दे॥ दिवारात्रिव्रतं यच्चैकमेव तिथौ स्मृतम् तस्यामुभयव्यापिन्यां कुर्याद्देव व्रतं व्रती उभयव्यापिन्यामेवेत्यन्वयः॥ कौर्म्मे प्रदोषव्यापिनी यत्र त्रिमुहूर्ता दिवा यदि तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत् प्रदोषलक्षणं तत्रैवोक्तम्। उदयात्प्राक्तनी संध्या घटिकात्रयमिष्यते। सायं संध्या त्रिघटिका अस्तादुपरि भास्वतः। प्रदोषस्त्रिमुहूर्त्तः स्याद्रवावस्तंगते ततः नक्तं विहितभोजनं तु नक्षत्रदर्शनस्य कर्त्तव्यम्॥ भविष्ये॥ मुहूर्त्तोनं दिनं नक्तमवदंति

मनीषिणः नक्षत्रदर्शनान्नक्तमहं सन्त्येगणाधिप। नक्षत्रदर्शनादिति त्र्यं
शोपे पंचमी ननु चत्वारी मानिकर्माणि सन्ध्यायां परिवर्जयेत् आहारं
मैथुनं निद्रां स्वाध्यायं च चतुर्थकमित्यनेन विरोध इति चेन्न भोजन निषे
धस्य मुख्य सन्ध्याकाल विषयत्वात्। खण्डमण्ड लोपलब्ध्या दित्यस्त
तारकोदयान्तो मुख्यः सायं सन्ध्याकालः किंचिदालक्ष्यतारकात्सूर्य
दर्शनावधिर्मुख्यः प्रातः सन्ध्याकाल ॥ अयुदाह याज्ञवल्क्यः॥ प्रातः
सन्ध्यां स नक्षत्रां सायं सन्ध्यां स भास्करामित्युपक्रम्य नासीत गायं-
त्रीं प्रत्यगा तारकोदयात् सन्ध्यां प्रात रेवं हि तिष्ठेदा सूर्य दर्शनात्।
त्रिघटिकात्मक सन्ध्या काल कथनं मुख्यकाले देवादकृत सन्ध्यस्य त
त्पर्यन्त करणानुज्ञापनार्थं सन्ध्या गर्जितादि विहितान ध्याय परं च यद्वा
भोजन निषेधोयं राग प्राप्त निषेधतिन वाचनिकं नक्तं भोजन मिति
न काप्य नुपपत्तिः यदेयं नक्त तिथिः पूर्वदिने प्रदोषं व्याप्नो ति परदिने
स्तादर्वाक् त्रिमुहूर्तं किंचिद्वास्पृशति तदा पूर्वैव ग्राह्या। प्रदोषव्यापि-
त्वात् अतः स्पृस्तिथयः पुण्या इति पूर्वोक्त जावालि वचनात् एकादशी
रूप नक्त व्रते विशेष माह व्यासः प्रदोषव्यापिनी ग्राह्या सदा नक्त व्रते ति-
थिः एकादशीं विना सर्वाः शुक्ले कृष्णोपि वा समाः॥ उभयत्र प्रदोषव्यापि-
त्वे परैव ग्राह्या॥ जावालिः॥ यदि स्यादुभयोरह्नोः प्रदोष व्यापिनी
तिथिः तत्रोत्तर त्र नक्तं स्यादुभय त्रापि सा यतः उभयत्र दिवसाचाव-
पि यदातु नक्त तिथिर्द्वयोरह्नोः प्रदोष व्यापिनी न तदापि परैव ग्राह्या
॥ स्कान्दे॥ प्रदोष व्यापिनी यस्या दिवा नक्तं विधीयते आत्मनो द्विगु-
णां छाया मति क्राम ति भास्करे तन्नक्त नक्त मि त्याहुर्न नक्तं निशि
भोजनम्। परदिने स्वल्प प्रदोष स्पृगपि नक्त तिथिः परैव शस्ता दि
वसानि स्पृश्ये वतिथौ विहितत्वात्। सौर नक्ते विशेष माह॥ सुमन्तुः

त्रिमुहूर्त्तस्पृगे वाह्नि निशि वातावती तिथिः स्यां सौरं चरेन्न क्तमह- न्ये वतु भोजनम॥ कौर्म्मे॥ नरस्य द्विगुणच्छायामतिक्राम्य यदार- विः तदा सौरं चरेन्न क्तं न नक्तं निशि भोजनम्॥ भविष्ये॥ यस्त्वा दित्य दिने भक्त्या भानुं संपूज्य यत्नतः नक्तं करोति पुरुषः सयात्यम रलोकताम्॥ सौरनक्ते रात्रौ भोजन निषेधो विशेषः यतिनक्ते॥ देवलः॥ नक्षत्र दर्शनान्नक्तं गृहस्थानां स्मृतं बुधैः यते र्दिनाष्टमे भा- गे तस्य रात्रौ निषिध्यते संग्रहेपि। भिक्षो र्दिनांशेष्टमे तस्माद्रात्रौ भोजन निषेधात् दिनाष्टम भागे यति नानक्तं कार्य्यम्॥ इति नक्त ति थि निर्णयः॥ प्रसंगान्नक्षत्र व्रतकालो निर्णीयते॥ विष्णु धर्मो त्तरे॥ उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः पूज्यते यत्र वा तारा निशीथे शशिनासह। अस्त व्यापिनि नक्षत्रे नक्षत्र व्रतं कार्य्यम्॥ यदात्यन्तक्षय वशाद्दिनद्वये प्यस्तकाल व्याप्त्यभावस्तदाऽर्द्धरात्रा द्रवीक चन्द्रेण युक्ते नक्षत्रे कार्य्य मित्यर्थः॥ निशीथ पदेनार्द्धरात्राद्र्वांक्कालो विवक्षितः यदार्द्धरात्रा वहिस्तु नक्षत्रं प्राप्यते तिथौ तन्नक्षत्र व्रतं कुर्या- दतीतेपरमं तथेति॥ स्कान्दे॥ तत्रोपवासे यदृक्षं तन्निशीथाद- धो भवेत् उपवासे यदृक्षं स्यात्तथा नक्तैकभक्तयोः॥ उपवासे विहि- तमृक्षं नक्तैकभक्तयोरपि ग्राह्य मित्यर्थः अयाचित व्रतमेकभक्त रूपत्वात मध्यान्ह व्यापिन्यामेव कार्य्यम[५]। परद्वारा याचितापि रा- त्रौ भोक्तव्य मिति वचनाभावात् परतो याचितालाभे त्वया प्युपवासक ल्पनात अयाचितमेव भोक्ष्ये इति संकल्पे एवकार प्रवेशे तदन्यन्न भोक्ष्ये इत्यर्थः पर्यवसाने अयाचितालाभे उपवासः कल्पनस्यौचि- त्यादिति॥

[५] अलाभे परतो याचितापि रात्रौ भोक्तव्यम्। अन्यथा ऽम वहरिष्यामयेवेति संकल्प भंग प्रसंगात इत्यल्लाडनाथसंचिन्ता

म

तिया

अथैकभक्तादिव्रतानाम खराडं वे वोपक्रम समास्यो विहित त्वतखराडं खराड तिथिस्वरूपं निरूप्यते॥

॥ सत्यव्रतः॥ उदयस्था तिथिर्याहिन भवेद्दिन मध्यगा। साखराडा नव्रतानांस्यात्तचा रंभः समापनम्॥ वृद्ध वशिष्ठः॥ खराडाराड वर्त्ति मार्त्तराडा यद्यखराडा भवेत्तिथिः व्रतप्रारंभ शांत स्यामनष्ट गुरुशुक्रयुक्। अत्र समिधदा भावेपि खराड तिथौ तन्निषेधादखराड तिथौ समाप्तिः प्राप्ता भावा भावो विहाय तृतीय प्रकारा भाव इतिभावः॥ श्री विश्वंभर विहिते स्मृतिसारोद्धार सज्ञके ग्रंथे॥ सिद्धोऽभव द्वितीयः शुभैकभक्तादि निर्णयोद्धारः॥ २॥



अथोपवासव्रतादिसाधारणायुग्म तिथिनिर्णय ःनिगमे॥ युग्माग्नि युग भूता निषड्मुनीवसुरन्ध्रके॥ रुद्रेणद्वादशीयुक्ताचतुर्द्दश्याच पूर्णिमा प्रतिपदा प्यमावास्या तिथ्यो युग्म महत्फलम्॥ एत द्यस्तं महाघोरं हंति पुण्यं पुराकृतम् युग्मं। द्वितीया। अग्निस्तृतीया। युगं चतुर्थी। भूतं पंचमी। षट् षष्ठी। मुनिः सप्तमी। वसुरष्टमी। रन्ध्रं नवमी। रुद्र एकादशी॥ गौड मैथुल ग्रन्थेषु॥ ऋतुभूतानि षराामुन्योरिति पाठः द्वितीया युता तृतीया तृतीया युत द्वितीया ग्राह्या। एतद्यस्त मिति न प्रतिपदा युता द्वितीया नचतुर्थी युक्ता तृतीया महाघोरत्वात् महापाप जनकत्वात्। पुराकृतकर्म विनाश कत्वाच्च एवं चतुर्थ्यादि युग्मेषु योज्यम्। एतानि शुक्ल पक्ष युग्मानि चतुर्द्दशी पूर्णिमा युग्म साहचर्यात्प्रतिपद मावास्या युग्मसाहचर्या च एत योः कृष्णा पक्षेऽ

सम्भवात् ॥ दीक्षितानन्दकरकृते दैत्यनारायणग्रन्थे ॥ हेमाद्रिग्रन्थे ॥ गौडमैथिलग्रन्थे ॥ च युग्मवाक्यमिदं पक्षद्वयेपि समानम् । पौर्णमास्यमावास्ययो विशेषाऽभिधानात् कृष्णचतुर्दशीशुक्लप्रतिपदो विशेषोस्तु द्वितीयादिदशमी पर्यन्तयुग्मस्य पक्षद्वय साधारणत्वेवाधकाभाव इत्युक्तम् । तत्र वक्ष्य माणस्वकृष्णपक्षीय पृथग्युग्मप्रति पादकवचनस्य प्रति पादकत्वादिति ॥ निर्णयामृते ॥ सम्पूर्णा दशमी कार्या परया पूर्वया थवा युक्तान दूषिता यस्मादतः सा सर्वतोमुखी । तथा सम्पूर्णा दशमीकार्या मिश्रितापूर्वजा थवा तथा दशमी च कर्त्तव्या स दुर्गा द्विजसत्तम । एकादशी व्रताङ्गदशम्येकादशीयुतानियमे षु कार्य्या तदन्या केवलदशमी नवमीयुतेति तात्पर्य्यम् ॥ सम्पूर्णा शुक्लदशमी स दुर्गा नवमीयुक्ता ॥ सुमन्तुः ॥ त्रयोदशी तु कर्त्तव्या द्वादशी सहिता मुने । त्रयोदशी शुक्ला । इदं वचनद्वयं दशमी त्रयोदश्योर्विहितकर्माभिप्रेत्य प्रवृत्तमिति नव्यस्तत्वम् ॥ अथ कृष्णायुग्मानि ॥ तत्र प्रति पदादिका विषमा तिथिः परयुता ग्राह्या द्वितीयादि समतिथिः पूर्वयुतेति ॥ यथाह्यापस्तम्बः ॥ प्रतिपत्स द्वितीया स्यात् द्वितीया प्रति पद्युता । चतुर्थीसंयुता या च सा तृतीया फलप्रदा । पंचमी च प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद । कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी पूर्वविद्धा प्रकर्त्तव्या परविद्धा न कर्हिचित दशमी च प्रकर्त्तव्या स दुर्गा द्विजसत्तम षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी एताः परयुताः पूज्याः पराः पूर्वेण संयुताः अत्र कृष्णपक्ष सम्बन्ध त्रयोदश्या एव न तु षष्ठ्यष्टम्योः पंचमी च प्रकर्त्तव्ये त्युक्तवाक्ये न कृष्णपक्षेऽष्टमी त्यत्र शुक्लवाक्येन च तयोः पूर्वयुतयोरेव पूज्यत्वात् ० एकादशी कृष्णपक्षे विद्धा दशमीयुतैव ग्राह्या एकदेशाद् द्वादशीयुक्तेति युग्मे बाधकवाक्याभावात् न चैतानि शुक्लपक्षे युग्मानीति पूर्वोक्त विरोधः बहूनि युग्मानि शुक्लपक्षीयाणि

ननु सर्वरीतिराजमार्त्तण्डनिर्णयामृतयोरित्यभिप्रायात्। एवं सत्येकस्मिन् दिने द्वितीयादितिथिद्वयसम्भवे द्वितीयादि विहितं कर्म तिथिद्वयभागेपि कर्त्तव्यम्। तृतीयादि व्रतसंकल्पोपि द्वितीयादिभागे कर्त्तव्यः संकल्पश्च व्रतादौ परारंभरूपः उक्तं हि प्रारंभो वरणं यज्ञे सकल्पो व्रतसत्रयोः नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया॥ ननु यो यस्य कालो विहित इति वचनात्। कथमन्यतिथि संकल्पोऽन्यस्यां तिथाविति चेत् सत्यम् तदानीं ज्योतिश्शास्त्रोक्ततिथ्यभावेपि स्मृत्युक्ततिथिसत्वात् यां तिथिं समनुप्राप्येति वचनात्। नच ज्योतिश्शास्त्रोक्त प्रथमः कल्पः क्रियताम् प्रातः प्रातःकाले तदभावात् प्रातःकालस्यैव संकल्पाङ्गत्वात्॥ यदाह दक्षः॥ प्रातःकाले तु संप्राप्ते कुर्यान्नक्तव्रतादिकम्। नापराह्णे न मध्याह्ने पितृकालौ हितौ स्मृतौ। एवमेकस्मिन् दिने तिथिद्वयोपनिपाते मिथो विरुद्धमेकभक्तनक्तादि व्रतद्वयम्पृथक्कार्य्यम् अविरुद्धं स्नानादि सकलं पृथक्कार्य्यम्॥ यथाह मरीचिः॥ तिथिद्वयोदितं यत्तु व्रतन्तत्पृथगाचरेत्। तिथ्योर्द्वैधे तु स्नानादि सकृदाह्निकमाचरेत्। पृथक्त्वे कर्तृभेदेन कार्ये धर्मे पत्नीं च पुत्रं वा विनयान्वितमिति वचनात्। स्नानन्दे वार्च्चनादि नियमरूप व्रतादितंत्रेणैव कार्य्यम्। एकेनापि कर्त्तुं शक्यत्वात्। अविरुद्धत्वमिति तदेव विरुद्धं तु कर्तृभेदेन कालभेदेन वा कार्य्यमिति ननु वर्द्धमानस्य पक्षस्य सोदया पूज्यते तिथिः यदा पक्षः क्षयं याति तदा स्यादपराह्णिकी। तथा शुक्लपक्षे तिथिर्ग्राह्या यस्यामस्तमियाद्रविः। अत्र शुक्लकृष्णौ यदाभ्यां वृद्धिक्षयावेवलक्ष्येते॥ तदुक्तम्॥ शुक्लपक्षे हि चन्द्रस्य वृद्धिर्भवति भास्करात् कृष्णपक्षे क्षयस्ताभ्यां तिथौ नाम पितौ खलु इत्यादि वचनैर्वृद्धिक्षयाभ्यां यत्तिथि पूज्यत्वमुक्तं तत्प्रथम।युग्मवाक्येनासन्देहाविति चेन्न। विषयभेदात्॥ यदुक्तं निगमे द्विती-

यादिषु युग्मानां पुन्यतानियमादिषु। एको द्दिष्ट विद्धाद्यादि वृद्धिह्रासादिनोहना। अत्र युग्मतया पूज्या सु व्रतादिकं क्षयवृद्धिभ्यां पूज्यास्त्वेको द्दिष्टादिकं कार्य्य मितिव्यवस्था॥

श्री विश्वंभर विहिते स्मृति सारोद्धार संज्ञके ग्रंथे॥
तिथिसामान्य विनिर्णय नामोद्धारस्तृतीयोयम्॥३॥—



## अथ प्रतिपन्निर्णयः तन्नामनिरुक्तिश्च (भविष्योत्तरे)

तिथीनांप्रवरायस्मा द्ब्रह्मणा समुदाहृता॥ प्रतिपाद्यापदे पूर्वे प्रतिपत्ते न सोच्यते॥ माधवीये॥ यत्र वन्हिपेयाकला प्रथमं पीयते प्रपन्नेत्युच्यते तया युक्तः कालविशेषः प्रथम्पदा चिना प्रतिपच्छब्दे नोच्यते। एवं द्वितीयादीनां पंचदश्यं तनानांमनिरुक्तिः। शुक्ल प्रतिपद् ऽमावास्या युतेव ग्राह्या। प्रतिपदाप्त्वे मावास्येति वचनात्। पंचमी सप्तमी चैव दशमी च त्रयोदशी प्रतिपन्नवमी चैव कर्त्तव्या संमुखी तिथिरिति पैठीनसि वचनात् प्रतिपत्संमुखी कार्य्या या भवेद पराह्णिकी ति स्कान्द वचनाच्च संमुखी सायान्ह व्यापिनी वृद्ध॥ वशिष्ठोपि॥ द्वितीया पंचमी वेधा द्दशमी च त्रयोदशी चतुर्थी चेत्युपवासे हन्युः पूर्वोत्तरे तिथी। उपवासे सप्तमी तु वेधा द्धन्त्युत्तरांतिथिम्। द्वितीयाद्याः पंचतिथयः स्ववेधादुपवासादि कार्य्ये स्वस्मात्पूर्वा मुत्तरांचतिथिं हन्युः सप्तमी तु स्ववेधा दुत्तरामेव तिथिं हन्तीत्यर्थः तेन प्रतिपत्तृतीया च द्वितीया विद्धा निषिद्धास्तं चतुर्थी षष्ठी च पंचमी विद्धा नि-

षिद्धेत्याभूत्यम्। नन्वेवं प्रतिपत्स द्वितीयास्यादित्यापस्तम्ब वचनवि
रोधः न विरोधः तस्य तिलकाशोक करवीर व्रत विषय त्वात्। ननु च
तुर्थीषष्ठ्यो पंचमी वेध निषेधे युग्मभूतानीत्य नेन विरुध्येत। न युग्म
वचनस्य गणेश व्यतिरिक्त चतुर्थी विषय त्वात् पंचमी वेध निषेधस्य
गणेश व्रत विषय त्वादित्य विरोधः। ननु चतुर्द्दशी स्ववेधात्त्रयोदशीं
पूर्णिमां चहन्तीत्युक्तम्। तदपि चतुर्द्दश्यां च पूर्णिमेति युग्मवाक्य नष
ष्ठ्यष्टमी अमावास्येत्यापस्तं व वाक्येन च विरोधि न विरोधि॥ आ
पस्तम्ब॥ वचनस्य कृष्ण त्रयोदशी विषयत्वात्॥ निषेधस्य वट
सावित्री व्रत व्यतिरिक्त विषयत्वाच्चा विरोधः॥ एवं सप्तमी स्ववेधा
दष्टमीं हन्तीत्यपि न विरुद्धम्॥ कृष्ण पक्षेऽष्टमी चैव कृष्ण पक्षे चतु
र्द्दशीत्यनेन निषेध वाक्यस्य शुक्लाष्टमी विषयत्वादिति। एवं वृद्ध
वशिष्ठवाक्यस्य निगम वाक्ये विरोधः परिहृतः। एवमन्यान्यपि विरुद्ध
वाक्यानि विषय भेदेन व्याख्येयानि। प्रताप मार्त्तण्डे। कृष्णा तु सर्वा प्र
तिपद् पराह्णगा अन्या चोत्तरा ग्राह्या। प्रतिपत्स द्वितीया स्यादित्याप
स्तंब वचनात् निषिद्ध पूर्व तिथि वेधस्तूपवासे स्वल्पोपित्याज्यः॥ घ
टिका मात्र वेधोपि दूषयत्युत्तरां तिथि मिति वचनात्। अत्र पूर्वेद्युः शु
क्ल प्रतिपद्युपवासं कृत्वा परे द्युस्तिथ्यन्ते पारणं कुर्यादिति। तिथि नक्ष
त्र नियमे तिथि भांते च पारणम्। अतोऽन्यथा पारणे तु व्रत भङ्ग मवा
प्नुयादिति सुमन्तु वचनात्॥ नन्वेवम्०॥ उपवासेषु सर्वेषु पूर्वान्हे
पारणं भवेत्॥ अन्यथा तु फलस्यार्द्धं धर्म मेवाप सर्पति इति देवल वच
न विरोधः स्यात् न स्यात्। एतस्य परविद्धो पवास विषयत्वात्॥ य
दुक्तं निगमे॥ पूर्व विद्धासु तिथिषु भेषु च श्रवणं विना। उपोष्य वि
धिवत्कुर्यात् तत्तदन्ते च पारणमिति॥ इति प्रपत्स सामान्य निर्णयः॥

## ॥ अथ तद्विशेष निर्णयः ॥

### ॥ भविष्यपुराणे

चैत्रे मासि महाबाहो पुण्या प्रति पदा परा यातस्यांस्व पचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तम। नतस्यदुरितं किंचिन्नाधयोव्याधयो नृप। भवन्ति कुरुशार्दूल तस्मात्स्नानं समाचरेत्। दिव्यं नीराजनं तद्धि सर्व रोग विनाशनम्। एतघनीराजनं पूर्वविद्धायां कार्य्यम्। होलिका नन्तर कर्त्तव्यत्वात् होलिकायाश्च पूर्वविद्धाया एव शस्तत्वात्। अत्र होलिका विभूतिवन्दनं स्नाना घनन्तर माचरेत्। तथाहुः प्रवृत्ते मधुमासे तु प्रति पत्सु विभूतये कृत्वा स्नानादि कार्याणि संतर्प्य पितृदेवताः। वन्दये द्धोलिकां भूतिं सर्व दुःखो पशान्तये ॥ विभूति वन्दन मंत्रः॥ वन्दितासि सुरेन्द्रेण ब्रह्मणा शंकरेणाच। अतस्त्वं पाहिनो देवि विभूते भूतिदा भव तथाच गोमहिष्यादिकं किञ्चित्तत्सर्वं भूषयेन्नृप। चेलवस्त्रादि भिस्सर्वैस्तोरणा धस्त तोनयेत्॥ अथ काम पूजा॥ युधिष्ठिरं प्रति कृष्ण वचनम्। यत्पिवंति वसन्ता घे चूत पुष्पं सचन्दनम्। सत्यं हृत्स्थस्य कामस्य पूजनं क्रियते जनैः। वसन्ता घे चैत्र कृष्ण प्रतिपदि ॥ पुराण समुच्चये॥ वृत्ते तुषार समये शित पंचदश्यां प्रात र्वसंत समये समुपस्थिते च। संप्राश्य चूत कुसुमं सह चन्दनेन सत्यं हि पार्थ पुरुषः स समं सुखी स्यात् समं सम्पूर्ण वर्षम्। चूत मग्र्यं वसन्तस्य माकन्द कुसुमं तव स चन्दनं पिवाम्य घ सर्व कामार्थ सिद्धये प्राशन मंत्रोयम्। ततः प्रात र्द्वितीयायां पुनर्मिन्त्रा दिसंयुतः नृपाति र्वितते देशे वितानवर शोभिते सर्वतश्च समास्तीर्णे रल्लकं बलराजिते। उपविश्या सने रम्ये पौराजन पदैः सह सिंदूर कुंकुम क्षोद पटवासै स्स चन्दने ॥ विकीर्य्य लोकांस्ताम्बूलैः समान्यच पृथक पृथ

कनृत्यगीतविनोदैश्च कुर्यात्कामं महोत्सवम्। एवं कुर्वन्नवाप्नोति यावत्सम्वत्सरं शुभम्॥ ब्रह्मपुराणे॥ चैत्रमासि जगद्ब्रह्मा ससर्ज प्रथमेहनि। तत्र ब्रह्मपूजनम् सर्वेषां देवानां वत्सराणां च पूजनम् होमो ब्राह्मणपूजनम्। विशेषेण च भोक्तव्यं कार्य्यश्चापि महोत्सवः नवसम्वत्सरारंभः सर्वसिद्धिप्रदायकः॥ सम्वत्सरारंभव्रतोयम्॥

## अथ तिलकव्रतम्भविष्योत्तरोक्तम्॥

नद्यास्तीरे तडागे वा गृहे वा तदलाभतः। पिष्टा पिष्टतकेनानकेन विलिखेत्पुरुषं वत्सराकृतिम्। चन्दनेनार्च्य तिलकं तेन कुर्यात्तु वत्सरम् भोगासिद्धेः खनाशोऽस्यान्ते चन्द्रलोकता। अस्यामेव विष्णुधर्मोक्तमारोग्यव्रतम्। सूर्य्यमभ्यर्च्य विविधैर्नैवेद्यैः सघृतान्नमविदध्याद्वत्सरं यावच्छुक्लप्रतिपदि व्रतम्। इदं त्रयोदशे मासि समाप्यारोग्यमश्नुते। अस्यामेव विष्णुधर्मोक्तं विद्याव्रतम्। वेदैः सहार्च्चयेद्ब्रह्माणं शुक्लपक्षादिके मधौ आरभ्य प्रतिमासं तु शुक्लप्रतिपदिव्रतम्। गोदेः कृत समाप्येदं विद्यावान्ब्रह्मलोकगः॥ अथ ज्येष्ठशुक्लप्रतिपदि करवीरव्रतम्॥ करवीरं पूजयेत्स्त्री देवोद्यानभवं नवम्। पंचोपचारैः सूर्यं च नत्वा भुंजीत वाग्यता। भुक्तेहविर्विधां भोगानन्ते सूर्यसलोकिनी। अथ भाद्रशुक्लप्रतिपदि महत्तमाख्यं शिवव्रतम्॥ स्कन्दपुराणे॥ नन्दिकेश्वर उवाच देवकेन विधानेन व्रतं पुण्यं महत्तमम्। कस्यां तिथौ प्रकर्त्तव्यं तद्विधानं वदस्व मे॥ स्कन्द उवाच॥ मासि भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ। नैवेद्यं च पचेन्मौनात्षोडश त्रिगुणानि च। फलानि पिष्टपक्वानि दद्याद्द्विजायस्खेचर। देवाय षोडशैतानि दातव्यानि प्रयत्नतः भुज्यंते षोडश

तथा व्रतस्य नियमाश्रयात्। इदं व्रतं पूर्व विद्धायां कार्य्यं रुद्रव्रतत्वात्।
रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिरिति॥ व्रह्मवैवर्त्तोक्तेः॥
एतद्व्रते शिव सौवर्ण प्रतिमा कलश स्थापना कार्या धेनु दानं व्रतान्ते
। फलं राज्यायुः प्राप्तिरते शिव सायुज्यमिति॥ अथास्यामेव स्क-
न्दपुराणोक्तं मौनव्रतम्। तच्च षोडश दिनात्मकम्। षोडश ग्रंथि
डोरक वंधनम् षोडश दूर्वाग्रयो निवेश्याः। शिव पूजा द्वितीय प्रतिप-
दि समापनम्। मौनेनैव नैवेद्यादिकरणम्। जलाशये पक्त्वा मृते न शिवं सं-
पूज्य भुंजीत। पुत्रपौत्र पदं ह्येतत्सर्वकाम फल प्रदम्। स्त्री पुरुष साधारणमि-
दं व्रतं पूर्व विद्धायामेव कार्य्यम् रुद्रव्रत त्वात्। संपूर्णे षोडशे वर्षे कुर्या
दुद्यापनं बुधः॥ अथाश्विन शुक्ल प्रतिपदि भविष्योत्तरोक्तम्
शोकव्रतम्, शोक वृक्ष पूजा पताका दिभिः व्राह्मणाय वृक्ष प्रतिदानं त-
तो भोजनम्। फलं शोकनाशः सौभाग्य लाभश्च अन्ते गौरीपद प्राप्तिः
स्त्री कर्तृकमिदम्॥ अथ कार्त्तिक शुक्ल प्रति पत॥ सा च पूर्व युतैव-
ग्राह्या तिथि वृद्धौ परा तदुक्तं पुराणसमुच्चये वर्द्धमान तिथौ नन्दा यदासा
द्वित्रियामिका। द्वितीया वृद्धिगामित्वा दुत्तरा तत्र चोच्यते तथा चोक्तम्।
त्रियामगा दर्श तिथि र्भवे च्चेत्सार्द्ध त्रियामा प्रति पद्दि वृद्धौ दीपोत्सवे तमु
निभिः प्रदिष्टे अतोन्यथा पूर्वयुते विधेये ननु पूर्व विद्धा प्रकर्त्तव्या शिवरा-
त्रिर्वलेर्दिनम् तथा या कुहू प्रति पन्मिश्रात त्रगाः पूजयेन्नृप पूजनात्त्री-
णि वर्द्धन्ते प्रजा गावो महीपति रिति पूर्व युताया विधानं पर विद्धाया निषे-
धस्य यथाहुः नन्दायां दर्शने रक्षा वलि दानं सुचेर्वहि। भद्रायां गोकु-
लक्रीडा संदेशो वै विनरपति भद्रायां द्वितीया याम॥ देवलोपि॥ प्र-
ति पद्दर्श संयोगे क्रीडनं तु गवां मतम् परविद्धे षुयः। कुर्यात्पुत्र दार धन
क्षय तथा प्रतिपद्यग्निकरणं द्वितीया यांग वार्च्चनम्। छत्र छेदं करिष्ये

तेवित्तनाशं कुलक्षय मित्यादिवाक्ये विरोध इति॥ चेत्सत्यम्॥ यस्यां प्रतिपदि द्वितीयायुक्तायां चन्द्रदर्शन संभावनात् द्विप्रयत्नान्निषेधवाक्यानां न विरोधः प्रतिपच्च पराह्ण्ात्मिक त्रिमुहूर्त्तव्यापिन्यां द्वितीया यो चन्द्र दर्शनं संभाव्यते तदाह्रान्वाधान विषये॥ शातातपः॥ द्वितीयात्रिमुहूर्त्ता चेत्प्रति पच्चा परन्हिकी अन्वा धानं चतुर्दश्यां परतः सोमदर्शना दिति अपराह्णश्च पंचधाविभक्तस्यान्हश्चतुर्थो भागः अतश्च यत्र प्रतिपदि परमुहूर्त्त व्यापिनी द्वितीया नत्र चन्द्र दर्शन संभवाद्वो क्रीडा न कार्य्या॥ तदुक्तं पुराणसमुच्चये॥ गवां क्रीडा दिने यत्र रात्रौ दृश्येत चन्द्रमाः सोमो राजा पशून्हांति सुरभी पूजकांस्तथा। चन्द्र दर्शनेतु तिथि वृद्धिगामित्वा द्वितीयायुक्तैव ग्राह्या। किंच सार्द्ध त्रियामा प्रति पद्वि वृद्धा वित्यत्र प्रति पदः सार्द्ध त्रियाम व्यापित्वेन द्वितीया वेधोप्य संभवी वेधस्य त्रिमुहूर्त्तात्मिकत्वात्। तिथि वृद्धौ पूर्व विद्धा निषेधाच्च परविद्धा प्राप्ति॥ तदुक्तं भविष्ये॥ यथा द्वादशभि मासै र्मासो वृद्धौ मलिम्लुचः। तथैवाहोरात्र वृद्धा तिथिः प्रोक्ता मलीम्लुचा। यथा मलीम्लुचः पूर्वो मासे देवस्तथोत्तरः। त्याज्या तिथिस्तथा पूर्वा ग्राह्या चैव तथोत्तरेति सर्वथा द्वितीया स्पर्श निषेधाग्रहो न युक्तः तादृशवाक्या श्रवणात्। अतश्चन्द्रदर्शना संभावनायां पूर्वाह्णे क्रीड नंग वामिति बोध्यम्। कर्म काल व्यापित्वात्तिथि वृद्धौ परैव प्रति पद्वो क्रीडा दौ ग्राह्येति सर्व मनवद्यम्॥ स्कन्दपुराणे॥ प्रात र्गोवर्धनः पूज्यो द्यूतं चापि समाचरेत्। भूषयितव्यास्तथा गावः पूज्याश्चा वाह दोहनाः अवाहदोहनाः वाहदोहना रहिता॥ गोवर्धन पूजामंत्र॥ गोवर्धन धराधार गोकुल त्राण कारक। बहु बाहु कृतो च्छाय गवां कोटिप्रदो भव। गोपूजा मंत्रो लक्ष्मी र्या लोक पालानां धेनुरूपेण संस्थिता। घृतं वहति यज्ञार्थे मम पापम्प

गोहत्तु अग्रतः संतु मे गावो गावो मे संतु पृष्ठतः गावो मे हृदये संतु गावां मध्ये
वशाम्यहम् ॥ स्कान्दे ॥ ततोऽपराह्णसमये पूर्वस्यां दिशि भारत । मार्गपा-
लीं प्रबध्नीयाद्दोस्तंभे चाथ पादपे कुशकाशमयीं दिव्यां लम्बकैर्बहुभिर्मुने
। कृते होमे विजेन्द्रस्तु बध्नीयान्मार्गपालिकाम् । नमस्कारं ततः कुर्यान्मं
त्रेणानेन सुव्रत मार्गपालि नमस्तेस्तु सर्वलोकसुखप्रदे विधेयैः पुत्र
दाराद्यैः पुनरेहि व्रतस्य मे । नीराजनं च तत्रैव कार्यं राष्ट्रजनप्रियम् मार्ग
पालीतले ने स्थं यांति गावो गजानृपाः राजा नो राजपुत्राश्च ब्राह्मणाः शू
द्रजातयः मार्गपालीं समुल्लंघ्य निरुजः स्युः सुखान्विताः । अथ तस्या
मेव वेष्टिकाकर्षणमपि कार्य्यम् ॥ यदुक्तमादित्यपुराणे ॥
कुशकाशमयीं कृत्वा वेष्टिकां सुदृढं नवाम् सामे कृतो राजपुत्रा हीनव
र्णास्तथान्यतः गृहीत्वा कर्षयेयुस्ते यथासारं मुहुर्मुहुः जये त्वहीनजाती
नां जयो राज्ञस्तु वत्सरम् वेष्टिका कर्त्वा ॥ अथ तस्यामेव वलिपूजोक्ता
॥ स्कान्दे ॥ कृत्वा तत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः । पूजा कृत्वा नृपः
साक्षाद्भूमौ मंडलके शुभे बलिमालिख्य दैत्येन्द्रं वर्णकैः पंचरंगकैः
सर्वाभरणसंपूर्णं विंध्यावल्या सहासितम् कुष्माण्डबाणजंभोरुमय
दानवसम्भृतम् । सम्पूर्णहृष्टवदनं किरीटोत्कट संकुलम् । द्विभुजं दैत्य
राजानं कारयित्वा नृपः स्वयम् । गृहमध्ये च शालायां विशालायां ततो
ऽर्चयेत् लोकश्चापि गृहस्यान्तः शय्यायां शुक्लतण्डुलैः संस्थाप्य ब-
लिराजानं फलैः पुष्पैश्च पूजयेत् । बलिमुद्दिश्य दीयंते दानानि कुरु
नन्दन यानि तान्यक्षयान्याहुर्मयैवं संप्रदर्शितम् । यदस्यां दीयते दा
नं स्वल्पं वा यदि वा बहु तदक्षयं कुजागरा भवेत्सर्वं विष्णोः प्रीतिकरं पर-
म ॥ इति दीपोत्सवनिर्णयः ॥ देवीपुराणे ॥ कार्तिके शु
क्लपक्षे तु प्रथमेहनि सत्यवान । जितश्च शंकरस्तत्र जयं लेभे च पार्वती ।

तदर्थं शंकरो दुःखी गौरी नित्यं सुखोषिता तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मा
नवैः तस्मिन्द्यूते जयो यस्य तस्य सम्वत्सरं जयः पराजयो विरुद्धोऽर्थलाभना
शकरो भवेत् ॥ **ब्रह्मपुराणे** ॥ कार्त्तिके शुक्लपक्षे तु विधानं द्वितयं हितम्
नारी नीराजनं प्रातः सायं मङ्गलमालिका ॥ अथ च प्रातः कल्याणार्थं नारी नी-
राजनं भवेत् । द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम् ॥ **भविष्यपु
राणे** ॥ लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयम् । तस्यां नीराजनं सायं
कुर्यान्मंगलमालिकाम् । मङ्गलमालिकां दीपमालिकाम् अत्र किंचिद्विचा-
र्यते ॥ **अनन्तभट्टीये** ॥ प्रतिपत्स्द्वितीया स्यादिति वचनं तिलका
शोककरवीरव्रतविषयमिति तद्भूर्ध्वं ॥ **हेमाद्रिणा** ॥ एवं सति कर्मा-
न्तरस्यापि पूर्वाह्ण एव विधानात्केवलतद्विषयत्वेन प्रतिपत्सद्वितीयेति
संकोचयितुं न शक्यते । न च पूर्वाह्ण विहितसकलकर्मविहितमेतत्यस्मि
न्काले तु यत्कर्म तत्कालव्यापिनी तिथिरिति समान्यवचनेनैव तस्य सि-
द्धत्वात् । किंचैवं प्रतिपत्संमुखी कार्येति वचनमपि अपराह्ण विहितकर्म
विषयं प्रसज्जेत ततश्चास्यापि वैयर्थ्यं स्यात् सामान्यवचनेनैव सिद्धेः । अ-
पि चैवं पूर्वविद्धपरविद्धग्रहणप्रतिपादकसर्ववाक्यवैयर्थ्यं प्रसज्जेत प्रा-
तस्त्विक पूर्वाह्णादिविधायकवाक्येभ्यः प्रदर्शितसामान्यवचनाच्चार्थस्या
स्य सिद्धत्वात् न हि द्वयोपि कर्मकालव्यापितिथ्यभावे पूर्वविद्धापरविद्धाग्रह-
णप्रतिपादकवाक्यप्रवृत्ते वैक्ष्यमाणत्वाच्चेति तद्यथेम् पूर्वोक्तरीत्या सर्व
सामञ्जस्यं स्यात् ॥ **अथाग्रहणशुक्लप्रतिपदि प्रारभ्य वाराह
पुराणोक्तं** ॥ द्वादशमासि कं धान्यव्रतम् । रात्रौ विष्णुपूजा वह्निपूजा
कुंडे च वह्निमंत्रै होमः मार्गादि चतुर्मासं यावकभोजनम् चैत्रादिषु च-
तुर्षु पायसभोजनम् । श्रवणादिषु शक्तुभोजनम् । वत्सरान्ते कांचन
वह्निप्रतिमादानम् इह जन्मनि सौभाग्यं धनं धान्यं च पुष्कलम् पुंस-

र्त्तकमिदं ॥ इति प्रतिपद्विशेष निर्णयः ॥

## अथ द्वितीया निर्णयः ॥

पूर्वाह्णिकी कृष्णा द्वितीया सदैव पूर्वा ग्राह्या। द्वितीयाप्रतिपद्युते त्युक्तेः प्रति पत्संमुखी कार्या द्वितीयां द्विज सत्तमेत्युक्तेश्च प्रति पत्संमुखी तद्विद्धा। अन्या कृष्णा द्वितीया सर्वा च शुक्ल द्वितीया परविद्धैव ग्राह्या युग्माग्नि वाक्यादुपवासे पि शुक्ला द्वितीया परैव शस्ता। कृष्णा तु द्वितीया पूर्वैव शुक्लप क्षे तिथि र्ग्राह्या इ त्युक्त वाक्यात्। एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी त्रयोदशी त्व मावास्या उपोष्याः स्युः परान्विता इति वाक्या च्चनतु द्वितीया प्रति पद्युते ति वाक्ये न प्रति पद्युक्त द्वितीयाया विधानात् ॥ तृतीये कादशी षष्ठी तथा चैवाष्टमी तिथिः वेधा द्धास्ता दुन्युक्ता उपवासे तिथि स्त्विमाः इति वाक्येन तृतीया युताया। निषेधा च्च विरोध इति चेन्न। पूर्व विद्ध विधानस्य पर विद्धा निषेधस्य च यम द्वितीया ऽशून्यशयन व्रत ॥ विषयत्वात् यम द्वितीयायामुपवासा भावाच्च हेमाद्रि स्वरसो प्येवम् ॥

॥ तत्संग्रहश्च ॥ अथ कृष्णा द्वितीया दिना पूर्वाह्ण यदि साभितातु परतः सर्वैति पारणा निर्णयः प्रतिपद्वत ॥ इति द्वितीया सामान्यनिर्णयः ॥ **अथ तद्विशेष निर्णयः** ॥ भविष्योत्तरे। चैत्रशुक्ल द्वितीयायामुमा पूज्या फला दिभिः शिवं पूजा ऽग्निपूजा च कर्त्तव्या मुनिसत्तम ॥ **देवी पुराणे** ॥ उमां शिवं हुताशं च द्वितीयायां प्र पूजयेत्। हविष्य मन्नं नैवेद्यं देयं गंधार्चैर्नान्वितं फलमाप्नोति विप्रेन्द्र सर्वक्रतु समुद्भवम् ॥ **अस्यामेव विष्णु धर्मोक्तं** ॥ वालेन्दुव्रतम्। दीनां तन्न दीस्नानम् चन्द्र मंडल पूजनम् हवनं नक्त भोजनम सम्वत्सरं यावत प्रति द्वितीयामेवं कृतिः। फलं सौभाग्यं स्वर्गावासिः स्त्री नृ कार्य मिदम् ॥

## अस्यामेव विष्णु धर्मोक्तं

नेत्रव्रतम् उपवासः अश्विनोः पूजनम् दक्षिणादानम् फलं तेजस्विता महाराज्यं द्वादशाब्दपर्यन्तं व्रतम् ॥ **अथ श्रावण द्वितीयां कृष्णामारभ्य भविष्यपुराणोक्तम्** शून्यशयनव्रतम् ॥ सुमन्तुरुवाच । अशून्यशयनीं नाम द्वितीयां शृणु भारत । यामुपोष्य न वैधव्यं स्त्री परयाति नराधिप यत्नी वियुक्तस्तु नरो न कदाचि [illegible] प्रजापते ॥ उपोष्य देवतामुपास्येत्यर्थः । न तु भोजन निवृत्तिः ॥ नक्तं भुञ्जीतेत्युत्तरवाक्य विरोधात् । श्रावणो च पूर्णिमान्तो ग्राह्यः ॥ **वामनपुराणे** ॥ एकादश्यां जगत्स्वामी शयनं परिकल्पयेत् । त्रयोदश्यां ततः कामः स्वपते शयने शुभे । त्रयोदश्यां ततो यक्षाः स्वपन्ति सुखशीतले पौर्णमास्यामुमानाथः स्वपते धर्म संस्तरे ॥ ब्रह्मा तथा प्रतिपदि नीलोत्पलमये पिच । विश्वकर्मा द्वितीयायां तृतीयायां गिरेः सुता आषाढ व्यवहितोत्तर द्वितीयायाम् । तस्यां तिथ्यां स्वपिति विश्वकर्मा प्रजापतिः द्वितीया सा शुभा पुराणा सुपुराय शयनोन्विता । तस्यां पर्यङ्कस्थलक्ष्मी नारायण पूजनम् । विविध फलाद्युपकल्पनम् । चन्द्रार्घ्य दानञ्च नक्त भोजनं । प्रातर्ब्राह्मण दम्पतीभ्यां प्रतिमा सहित दानम् । कश्चित्तु मास चतुष्टय मेतद्व्रतम् कार्य्य मित्युक्तम् पुत्र पशुरत्नादि प्राप्तिः विष्णुलोक प्राप्तिश्च फलम् ॥ **इदं व्रतं** ॥ चन्द्रोदयव्यापिन्यां द्वितीयायां कार्य्यम् । एकभक्ते दिवा नक्ते निशि चन्द्रोदये व्रते । तिथिस्तात्कालिकी ग्राह्या पारणे त्वपरा तिथिरित्युक्तेः चन्द्रोदयव्रतत्वं चास्य चन्द्राय चार्घ्यं दातव्य इति वचनात् । चतुर्थ्यां सितपक्षे तु मासे तु श्रावणादिषु । अशून्य

स्वयं व्रतं कुर्याज्जय यातु फलाधिकम्। दिनद्वये पीन्दूदयव्यापित्वे तूत्तरैव ग्राह्य इत्यर्थः॥ **अथ कार्त्तिक शुक्ल द्वितीया यम द्वितीया तत्कृत्य स्कान्दे॥** ऊर्जे शुक्ल द्वितीयायाम पराह्णेऽर्चयेद्यमम्। स्नानं कृत्वा भानुजायां यमलोकं न पश्यति तथा ऊर्जे शुक्ल द्वितीयायां पूजितस्तर्पितो यमः। महिषासुरमारूढो दंड मुद्गर धारिसिः। वेष्टितः किंकरै र्दृष्टैस्तस्मै यच्छंति वाञ्छितम्। तथा कार्त्तिक शुक्ल पक्षस्य द्वितीयायां तु नारद। यमो यमुनाया पूर्वं भोजितः स्वगृहेऽर्चितः। अतो यम द्वितीये यं त्रिषु लोके षु विश्रुता। अस्यां निज गृहे विप्र न भोक्तव्यं ततो बुधैः। स्नेहेन भगिनी हस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्। दानानि चात्र देयानि भगिनीभ्यो विधानतः। सर्वा भगिन्यः सम्पूज्या अभावे प्रति पन्नकाः प्रतिपन्नकाः भगिनीत्वेन स्वीकृताः। इयं च कर्म कालिकी ग्राह्या दिन द्वये तद भावे पूर्वैवेति॥ पौषशुक्ल द्वितीयायां विष्णु धर्मोक्त मारोग्यव्रतम्॥ गोशृंगोदके न स्नानम्, बालेन्दु पूजनम्। क्षीराद्याहारं, भूमि शयनम्, वत्सरं व्रत करणम्, आरोग्य सौभाग्याद्याप्तिः फलं साधरणम्॥

## अथ तृतीया॥

(ब्रह्मवैवर्त्ते)

रंभाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम। अन्येषु सर्व कार्येषु गणा युक्ता प्रशस्यते रंभान्या सर्वा प्युत्तरे वेत्यर्थः। शुक्ल वाक्यं तु रंभा परम्। अनङ्ग त्रयोदशी रंभा नो पोष्याः स्यु परान्विता इत्युक्तेः॥ **स्कान्दे॥** कृष्णाष्टमी चतुर्थी च सावित्री वट पैतृकी॥ शुक्ल त्रयोदशी रंभा नो पोष्याः स्युः परान्विताः॥ **ब्रह्मवैवर्त्ते॥** तृतीया तु न कर्त्तव्या द्वितीया वा परहिता विभो। द्वितीया परहिता तां तु यः करोति नराधमः सम्वत्सर कृतेनेह नरो धर्मे-

णामुच्यते ॥ पुराणसमुच्चये ॥ द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु या । सा याति नरकं घोरं कालसूत्रं भयंकरम् । तथा द्वितीयाशेषसंयुक्तां या करोति विमोहिता । सा वैधव्यमवाप्नोति प्रवदंति मनीषिणः । तथा चतुर्थीसहिता या तु सा तृतीया फलप्रदा अवैधव्यकरी स्त्रीणां पुत्रपौत्रविवर्द्धिनी ॥ स्कन्दे कलाकाष्ठापि या चैव द्वितीया संप्रदृश्यते । सा तृतीया न कर्त्तव्या कर्त्तव्या गणसंयुता ॥ गणश्चतुर्थी ॥ इयं चैकादशीवत्स्वल्पापि द्वितीयदिने ग्राह्या । यदा क्षयस्तदा पूर्वविद्धापि कार्य्या तथा च वृद्धवशिष्ठः । एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धापि कर्त्तव्या यदि न स्यात्परेऽहनि ॥ इति तृतीया सामान्य निर्णयः ॥

## अथ विशेषः स्कन्दे ॥

देवीपुराणे ॥ तृतीयायां यजेद्देवीं शंकरेण समन्विताम् । कुंकुमागुरुकर्पूर मणि वस्त्र सुगंधकैः । स्रग्गंध धूप दीपैश्च दमनेन विशेषतः । आन्दोलनं ततो विप्र शिवोयातुष्टये सदा । रात्रौ जागरणं कार्य्यं प्रातर्देया च दक्षिणा । हेमवस्त्रान्न पानानि ताम्बुलानि स्रजस्तथा । सौवर्णी च उमा कार्या राजतः शंकरस्तथा । चतुर्भुजस्तु देवेशो द्विभुजा तु भवेदुमा ॥ इति हिन्दोलकतृतीया व्रतम् ॥ अस्यामेव सौभाग्य शयन व्रतम् । मात्स्ये, वसन्त मासमासाद्य तृतीयायां जनप्रिये सौभाग्याय सदा स्त्रीभिः कार्य्यं पुत्र सुखेप्सुभिः, अस्य विधिर्मत्स्यपुराणाद्द्रष्टव्यः । विस्तर भयान्नेह श्लोका लिख्यंते । चूर्णिकया किंचित्कं दुक्तं वक्ष्यते च । चैत्रशित तृतीयो मा विवाह दिनम् । गौरीशंकरयोर्गो शृंगोद प्राशनम् । प्रातर्विप्र दंपतीभ्यां प्रतिमादानम् ॥ आर्द्रव्रतम् ॥ सर्वकामाप्तिः शिवलोकप्राप्तिः फलम् । इयं मन्वन्तरस्य दिर्णि । मात्स्ये, आश्विने शुक्ल नवमी द्वादशी कार्त्तिके मि

ता तृतीया चैत्रमासस्य, तथा भाद्रपदस्य च श्रावणे चाष्टमी कृष्णा पौषे चैकादशी तथा शीता षाढस्य दशमी माघमासस्य सप्तमी। श्रावणे मास्यमावास्या ज्येष्ठे पंचदशी तथा। आषाढी कार्त्तिकी माघी चैत्री चापि विशेषतः। स्मृता मन्वादयः प्रोक्ता मुनिभिः पूर्वदर्शिभिः॥ **अथ चैत्रभाद्रमाघशुक्लतृतीयासु भविष्योत्तरोक्तं, गौरीव्रतम्॥** चैत्रशुक्लतृतीयायामुपवासं नियमं विधाय पट्टवस्त्रादि मंडपिकायां पुरतः कुण्डे गौरीं यजेत। ततो रात्रौ होमः रात्रौ जागरणम्। प्रातर्दक्षिणादानं भोजनम्। भाद्रमाघचतुर्थ्यामधिकं विनायकपूजनम्। स्वतन्त्रं व्रतं सर्वकामप्रदम्॥ **अथ वैशाखशुक्लतृतीयायां भविष्योत्तरोक्तं, अक्षयतृतीयाव्रतम्॥** श्रीनारायणपूजनम् घटादिदानम्। एकभक्तम् दत्तस्याक्षयता॥ **विष्णुधर्मोत्तरे॥** वैशाखशुक्लपक्षे तु तृतीयायामुपोषितः। अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च। सा तथा कृत्तिकोपेता रोहिण्या वा युता शुभा। दुर्लभा बुधवारेण सोमेनापि तथा युता। रोहिणी बुधयुक्तापि पूर्वविद्धा विवर्जिता॥ देवीपुराणे गौरीपूजोक्ता॥ तृतीयायां तु वैशाखे रोहिण्यृक्षे च पूज्यं च। उदकुंभप्रदानेन शिवलोके महीयते। इयं च शुक्ला युगादित्वाद्विष्णुपूजा। होमदानादिषु पूर्वाह्णव्यापिनी ग्राह्या शुक्ला पूर्वाह्णिकी ग्राह्येति वचनात्॥ **भविष्ये॥** वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुम्। नारायणं पूजयेथाः पुष्पधूपविलेपनैः वैशाखशुक्लपक्षे तु तृतीयायां तथैव च गंगातोये नरः स्नात्वा मुच्यते सर्वकिल्विषैः तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत्। यवान्दद्यात द्विजातिभ्यः प्रयतः प्राशयेद्यवान्

**॥ अथ ज्येष्ठशुक्ला रंभातृतीया भविष्योत्तरोक्ता॥** पञ्चाग्निमध्य उपवेशनम्। गौर्याः पूजनम् ब्राह्मणद्वारा होमः ततोऽष्ट समद्ये दक्षिणानुसमापनम्। सौभाग्यादिप्राप्तिः रुद्रलोकाप्तिश्च फलम्। पुष्पम

राडपिकाकार्य्यां रंभास्तंभोपशोभितेतिवचनात्रंभाख्येयम्। साधारणव्रतमिदम् ॥ श्रावणकृष्णतृतीयायांतुष्टिप्राप्तिव्रतं विष्णुधर्मोक्तम्॥ श्रावणोत्र पौर्णमास्यंतः गोविन्दपूजा तुष्टिप्राप्तिः फलम्॥ अथ भाद्रशुक्लतृतीयायां कोटीश्वर व्रतं स्कन्दोक्तम्॥ उपवासः अब्द चतुष्टयं व्रतकरणम्। अखण्डतण्डुलैर्लक्षसङ्ख्याकैर्दुग्धमिश्रैर्देवीपूजा उत्कृष्टपतिप्राप्तिः सौभाग्याप्तिश्च फलम्। अस्यामेवहरितालिकाव्रतम्। हरितशाद्वलस्थिते हरिकालीपूजनम्। कांचनीं गौरींकृत्वासंपूज्य गुडापूपंनैवेद्यन्दद्यात् सर्वपापहरणंफलम्॥ अथ वैशाखभाद्रमार्गशुक्लतृतीया सुमत्स्यपुराणोक्तमनन्ततृतीयाव्रतम्॥ पंचगव्येनललितायाः प्रतिमापूजनम्। आब्दंव्रतम्, अन्तेसुवर्णकलशोपेतशय्यादानम्। मिथुनपूजनम्। फलंच पुत्रादिप्राप्तिःगौरीसलोकता साधारणमिदम्॥ मार्गेपि भविष्योत्तरोक्तं, रंभातृतीयाव्रतम्॥ प्रातरुपवाससंकल्पः प्रतिमासमाब्दंव्रतकरणम्। रात्रौ पार्वतीपूजाकुशोदकप्राशनम्। प्रातर्ब्राह्मणभोजनम्। सहिरण्यलवणदानम् ततः पारणम्। फलमिह सौभाग्यमक्षतापत्यमन्ते शिवसलोकता॥ अस्यामेव भविष्यपुराणोक्तमुमामहेश्वरव्रतम्॥ उपवासो ललितापूजा रात्रौजागरणम्। प्रभातेपूजा प्रार्थनं पंचगव्यं हविष्यं च भोजनम्। आब्दंव्रतम्, उद्यापनम्, पुत्रपौत्राप्तिः शिवसलोकता॥ अस्यामेवकालिकापुराणोक्तम वियोगव्रतम॥ पूर्वदिनेचन्द्रदर्शनानन्तरं नक्तंभोजनम् भूशयनम्। तृतीयायां प्रातः स्नानादि शालिपिष्टमयनरस्त्री प्रतिमाद्वयंकरणम्, शिवो माधवयापूजनम्। उपवासः प्रातर्दानं पारणंच, आब्दंव्रतम्, अन्ते चोद्यापनम् अवियोगाप्तिः फलम्॥ अथ माघशुक्लतृ-

तीयायां मात्स्योक्तं रस कल्याणी व्रतम् ॥ इक्षुरसादि-
नादेव्य भिषेकः स्वर्णाब्ज कुंभादिदानम् उपवासः आर्द्रं व्रतम् पापक्षया
द्यनेक फलम् गौरी सलोकता ॥ अस्यामेव भविष्योत्तरोक्तं गुडलवणदा-
नम्, तदुक्तम् ॥ माघशुक्ल तृतीयायां गुडस्य लवणस्य च दानं श्रे-
यस्करं राजन् स्त्रीणां च पुरुषस्य च । गुडेन तुष्यते गौरी लवणेन महेश्वरः
॥ अथ फाल्गुन शुक्ल तृतीयायां वाराह पुराणोक्तं सौ-
भाग्य तृतीया व्रतम् ॥ उपवासः सश्रीक हरि प्रतिमा पूज्या । मध्वा-
दि पूरित बहुपात्र दानम् फलं सौभाग्याप्तिः ॥ अथ पद्मपुराणा-
न्तरगत नागर खण्डे पंच पिण्डिका गौरी व्रतम् ॥
पंचपिण्डात्मिकां गौरीं कृत्वा कर्दम संभवाम् । पूजयेद्देभिः पंच भूत मंत्रैः
लक्ष्मीरुवाच, नमः पृथिव्यै क्षान्त्यै ते नम आपोमये शुभे । तेजस्विनि न-
मस्तुभ्यं नमस्ते वायु रूपिणि आकाश रूप संपन्ने पंच रूपे नमोस्तु ते । फ-
लं सौभाग्याप्तिः ॥ अथ चतुर्थी, प्रताप मार्त्तण्डे ॥ गणेश गौरी
बहुला व्यतिरिक्ताः प्रकीर्त्तिताः चतुर्थ्यः पंचमी युक्ता देवतान्तर योगतः गौरी
चतुर्थी कुन्द चतुर्थ्यो युग्म वचनमपि त्रयान्य परम् ॥ ब्रह्म वैवर्त्ते ॥ च-
तुर्थी संयुता या तु सा तृतीया फलप्रदा । चतुर्थी च तृतीयायां महापुण्य फल
प्रदा । कर्त्तव्या व्रति भिर्वत्स गणनाथ सुतोषिणी । गणनाथ पदं गौरी बहुल-
योरप्युपलक्षकम् । उपवासे पि गणेश चतुर्थी पूर्वा ग्राह्या अन्या सर्वाप्यु-
त्तरैव ॥ यदाह गर्ग्गः ॥ एकादशी च षष्ठी च अमावास्या चतुर्थिका ।
उपोष्याः पर संयुक्ताः पराः पूर्वेण संयुताः ॥ पुराण समुच्चये ॥ गौ-
र्याश्चतुर्थी वट धेनु पूजा दुर्गार्चनं दुर्नरहोलिके च वत्सस्य पूजा शिवरा-
त्रिरेताः परा विनिघ्नंति नृपस्य राज्यम् । धेनुपूजा बहुलायां दीपोत्सव प्रति
पदि च विहिता ग्राह्या । वत्सस्य पूजेति वत्स द्वादशी विहिता धेनु पूजायाः प्र

यसुपादानात् ॥ इति चतुर्थी सामान्य निर्णयः ॥ अथ तद्विशेष निर्णयः ॥ चैत्र शुक्ल चतुर्थ्यान्तु गणेश पूजा ॥ देवी पुराणे ॥ गणेशः कारयेत्पूजां लड्डुकादिभिरादरात् । चैत्र शुक्ल चतुर्थ्यान्तु सर्व काम समृद्धये गणानामीट गणेट तस्य गणेशः ॥ ज्येष्ठशुक्ल चतुर्थ्यां स्त्री भिरुमा पूज्या ॥ तदुक्तं ब्रह्म पुराणे, ज्येष्ठशुक्ल चतुर्थ्यान्तु जाता पूर्वं सुमासतीत स्मात्सातत्र संपूज्या स्त्री भिः सौभाग्य वृद्धये । उपहारै स्व विविधैर्नृत्यगीतो त्सवादिभिः होमैः पयोभिर्व स्त्रैश्च पत्र पुष्पैः सुगंधिभिः ॥ श्रावण कृष्ण चतुर्थ्यां स्कन्द पुराणोक्तं संकट चतुर्थी व्रतम् । श्रावणे बहुले पक्षे चतुर्थ्यां च विधूदये । गणेशं पूजयित्वा च चन्द्रायार्घः प्रदीयते । चन्द्रार्घानन्तरं पञ्चमोदका विप्राय देयाः पंच स्वभक्ष्याः स्तच्च प्रतिमासं यावज्जीव मेक विंशति वर्षाणि स्क वर्षं वा कार्य्यम् । उद्यापन होम प्रतिमा दानैः सर्व कामफल प्रदम् ॥ श्रावणस्य शुक्ल चतुर्थ्यां कार्त्तिकस्य वा सौर पुराणोक्तं, दूर्वा गणपति व्रतम् ॥ सुवर्ण दूर्वोपरि सौवर्ण गणेश पूजा । आचार्याय प्रतिवेदनम् पंच वर्षानंतर मुद्यापनम् । फलं च पूर्ववत् । स्कान्दे तु ॥ रविवार युक्तायां कस्यांचि चतुर्थ्यां मे तद्व्रतं युक्तम् ॥ अथ भाद्र शुक्ल चतुर्थी शिवाख्या ॥ तस्यां गणेश पूजनम् । स्नानादिकं शतगुणं भवति ॥ तदुक्तं भविष्योत्तरे ॥ शिवा शांता सुखा राजन् चतुर्थी त्रिविधा स्मृता मासि भाद्रपदे शुक्ला शिवा लोके प्रपूजिता । तस्यां स्नानं तथा दानमुपवासो जपस्तथा क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप ॥ अथास्यामेव सिद्धि विनायक व्रतम् ॥ स्कन्दे ॥ प्रातः शुक्ल तिलैः स्नात्वा मध्यान्हे पूजयेन्नृप स्वशक्त्या गणनाथस्य स्वर्ण रूप्य मयाकृतिम् । अथवा मृण्मयीं कुर्यात् वित्तशाठ्यं न कारयेत् । तथैक विंशतिं गृह्य मोदकान्घृत पाचितानि । स्थापयित्वा गणाध्यक्ष स-

मीपेकुरुनन्दन दश विप्राः प्रदातव्याः स्वयं चाद्यास्त याद्दश रुकं गणाधिपे दद्यात्सनैवेद्यं नृपोत्तम। विप्राय भोजनं दद्याद्भुंजीयात्तैलवर्जितम्। अस्यां चन्द्रदर्शनं निषिद्धम्॥ मार्कण्डेये॥ सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम्। मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्नतं तथा पश्यन्सरः दोषस्य शांतये सिंहः प्रसेनमिति संपठेत्॥ ब्रह्मपुराणे॥ वासुदेवोभिशस्तस्तु निशाकरमरीचिषु स्थितश्चतुर्थ्यां माघा यामनुष्या णां पतितश्च सः ततश्चतुर्थ्यां चन्द्रं तु प्रयत्नाद्वीक्ष्यमानवः पठेत्पौराणिकं मंत्रं प्राङ्मुखो वाप्युदङ्मुखः प्रयत्नात्पठेदित्यन्वयः भाद्रायां शुक्लचतुर्थ्याम्॥ मंत्रो विष्णुपुराणे॥ सिंहः प्रसेनमवधीत्सिंहो जाम्बवताहतः सुकुमारकमारोदीस्तव ह्येषः स्यमंतकः॥ निर्णयामृते॥ भाद्रकृष्णनवम्यां प्रबोधिता यादेव्य अश्वयुक् शुक्ले चतुर्थ्याम भ्यङ्गादिसंस्कारैः केशान्विशोधयेत्॥ तदुक्तं देवीपुराणे॥ भाद्रस्य कृष्णपक्षे तु पूजयित्वा द्रुमेपिवा नवम्यां बोधयेद्देवीं गीतवादित्रनिःस्वनैः शुक्लपक्षे चतुर्थ्यां तु देवी केशविशोधनम्। प्रातरेवतु पंचम्यां स्नापयेत्सलिलैः शुभैः सप्तम्यां पत्रिका पूजामष्टम्यामप्युपोषणम्। नवम्यां पूजयित्वा तु बलिदानं समाचरेत्। दशम्यां रथमारोप्य गीतवादित्रनिःस्वनैः जगद्भ्रामयेद्देवीं प्रणिपत्य विसर्जनम्॥ अत्राश्विनशित चतुर्थ्यां केशविशोधन प्रसंगाद्दशदिनकृत्यमुक्तम्॥ माघशुक्लचतुर्थ्यां स्कन्दोक्तं वरचतुर्थीव्रतम्॥ तत्राभ्यप्रति मासं चतुर्थ्यां गणेशपूजा। अस्यालवणामेकभक्तम् द्वितीयेद्वे नक्तम् तृतीयेत्वयाचितः चतुर्थे तूपोषणम्॥ अथोद्यापनम् फलं विद्यादीप्सितप्राप्तिः अस्यामेव स्कन्दोक्तं कृच्छ्रचतुर्थीव्रतम् पूर्ववत्। माघशुक्लचतुर्थ्यां कुन्दैः शिवपूजा॥ तदुक्तं कौर्म्मे॥ माघे शुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदाशिवम्। संपूज्य योहिनक्ताशीसप्राप्नोति

थ्रीयन्तर, इयंवरदाख्या। इयंमेवकुन्द चतुर्थी ॥ **अथब्रह्मपुराणो क्त मुमाव्रतम्** ॥ कुन्दपुष्पैः कुङ्कुमा लक्तकं सिन्दूरैः पंचो पचारा गौरी पूजाः गुडार्द्र क ग्रयो लवणानि नैवेद्यानि स्त्रियः पूज्याः विप्राश्च भोजयितव्याः पश्चात्स्वयं भुंजीत बंधुभिः सह फलंसौभाग्या दि वृद्धिः साधारणम्। देवी पुराणो त्वियं कुन्द चतुर्थ्या क्ता माघ मासेतु संप्राप्ते चतुर्थी कुन्दसंज्ञिता। उपोष्या सासुरंश्रेष्ठ ततो राज्यं भविष्यति इय मेव भविष्योत्तरे शांति चतुर्थ्युक्ता गणेश पूजा उपवासः ॥ अथ फाल्गुनादि मास चतुष्टय साध्य गणेश चतुर्थी व्रतम्वराह पुराणोक्तम् ॥ गणेश पूजा तिल होमः नक्तन्तिलान्नं पारणं तिलदानम् प्रति शुक्ल चतुर्थी चतुर्मास मेवं कृत्वा पंच मेहेमंगणेश मासनैः पंचरात्रे रूपंतं विप्रायदद्यात फलं सर्व विघ्ननाशः ॥ **भविष्य पुराणे** ॥ चतुर्थ्यांच यदाराजन्नार वारो व्रता न्वितः दद्यात्तिलान्नं विप्राय स्वयं भुञ्ज्यात्तिलोदानम्। आर वारः कुजः वर्ष द्वयं स्माप्यातिलचतुर्थीयम् ॥ गणेश तुष्टि रिष्ट प्राप्तिश्च फलम् ॥ **मात्स्ये** ॥ चतुर्थ्यां नक्त भुग्दद्या दब्दान्ते हेमवारणम्। व्रतंवैनायकं नाम शिव लोक फल प्रदम् इदं द्वादशस्वपि मासेषु विशेषा न भिधानात्। एवं गणेशगौरी वहुला व्रतानि तृतीयायुक्त चतुर्थ्या मेव कार्य्याणीतिसिद्धम्। अन्यानि नाग चतुर्थ्या दीनि पंचमी युक्ता यामिति ध्येयम् ॥ **तदुक्तं पुराण समुच्चये** ॥ युगं मध्यं दिने यत्र तत्रचो पोष्य पन्नगान्। क्षीरेणा प्याय्य पंचम्यां पारयेत्प्रयतो नरः। विषाणि तस्य नश्यंति न तंहिस्यंति पन्नगाः युगं चतुर्थी। कौर्मेपि, तिथौ युगान्हायायांच समुपोष्य यथा विधिः शंखपालादि नागानांशेष स्य च महात्मनः पूजा कार्य्या पुष्प गंध क्षीराप्यायन पूर्वकम् ॥ कार्त्तिक शुक्ल चतुर्थ्यां नागव्रतमिति कालादर्शः ॥ श्रयंगतासु सर्वास्वपि चतुर्थी षु गणेशः पूज्यः

चतुर्थ्यां गणनाथस्यत्युक्ते रिति ॥ अथ पंचमी निर्णयः सा चोपवासा दिषु पूर्वविद्धा ग्राह्या युग भूतानीत्युक्तेः जावालिरपि प्रति पत्पंचमी चैव उपोष्ये पूर्वसंयुते ॥ पैठीनसिः ॥ प्रति पत्पञ्चमी चैव दशमी च त्रयोदशी सप्तमी नवमी चैव कर्त्तव्या संमुखी तिथिः ॥ ब्रह्म वैवर्त्ते ॥ प्रति पत्पंचमी भूता सावित्री वट पूर्विका। नवमी दशमी चैव नोपोष्याः पर संयुताः य त्तु ब्रह्म वैवर्त्त वचनम् पंचमी च प्रकर्त्तव्या षष्ठ्या युक्ता चनारद। नहि षष्ठी नाग विद्धा कर्त्तव्या तु कदाचनेति तत्स्कन्दोपवास विषयं नागपूजा विषयं वा स्कन्दोपवासे स्वीकार्य्या पंचमी पर संयुता। त्रिमुहूर्त्तो तु षष्ठ्याः स्यात्परा पूर्व युतान्यथेति तत्रैवोक्तत्वात्। नागव्रते तु पंचमी परविद्धा ग्राह्या श्रावणे पंचमी शुक्ला संप्रोक्ता नाग पंचमी तां परित्यज्य पंचम्यश्च चतुर्थी सहिता मता इति वचनात्। ननु कृष्णाष्टमी स्कन्द षष्ठी शिवरात्रि चतुर्दशी एताः पूर्वयुताः कार्य्यास्तिथ्यंते पारणं भवेत ॥ वाराहे ॥ आषाढे शुक्ल षष्ठी तु तिथिः कौमारिको स्मृता। कुमार मर्चयेत्तत्र पूर्वत्रोपोष्य वै दिने। आस्याम्विरोध इति चेन्न देश भेद व्यवस्थाया निर्णयामृते विरोध स्य परिहृतत्वात् ॥ तदुक्तम् ॥ केषुचिद्देशेषु पंचम्यां मुपोष्य षष्ठ्यां स्कन्द पूजयंति ॥ हेमाद्रिस्तु ॥ पंचमी तु प्रकर्त्तव्या षष्ठ्या युक्तेत्यादि वचनं शुक्ल पक्ष विषयम्। शुक्ल पक्षे तिथिर्ग्राह्या यस्यामभ्युदिते रवि रिति वचनात् षड्विंशन्मते। गणेश स्कन्दयोगाभ्यां क्रमान्नागः शुभाशुभः। शिवाभिन्नौ तयोः पन्न गानाम दिवर्हिणौ २ गणेशश्चतुर्थी स्कन्दः षष्ठी नागः पंचमी तयोर्गणेश स्कन्दयोः। पन्ने वाहने भिन्नाभिन्नौ तयोः पन्ने इति युक्त्यापि चतुर्थी युता पंचमी ग्राह्येति सिद्धम् ॥ इति पंचमी सामान्य निर्णयः ॥ {अथ तद्विशेष निर्णयः}

मात्स्ये शुक्लाया मथ पंचम्यां चैत्रे मासि शुभानना। ब्रह्मलोका न्मानुषंहि

संप्राप्ता केशवाज्ञया तस्मात्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुंचति ॥ षष्ठी पंचमी कार्या विष्णुलोकगतिप्रदा भविष्ये पञ्चमी दयिता राजन्नागानां नन्दविवर्द्धिनी तस्यामभ्यर्चयंतीह नागान् क्षीरेणाये नराः तेषां कुले प्रयच्छंति अभयं ते सुपूजिता इदं वाक्यं चैत्र मुपक्रम्य देवी पुराणे। पंचम्यां पूजयेन्नागाननन्ताद्यान्महोरगान्। क्षीरं सर्पिस्तु नैवेद्यं देयं सर्पसुखावहम्। मत्स्य पुराणे नागास्तत्र तु कर्त्तव्याः खड्गखेटक धारिणः अधः सर्पाकृतिस्तेषां नाभे रुर्द्धन्तु पौरुषी फणा चमूर्द्धि कर्त्तव्या द्विजिव्हा वहवोऽसमाः असमा विषमा॥ श्रावणासितपंचम्यपि नागपंचमी॥ **तदुक्तं भविष्योत्तरे॥** श्रावणेमासि पंचम्यां शुक्लपक्षे नराधिप द्वारस्योभयतो लेख्या गोमये नविषोल्वणाः पूज्याश्च विधिवद्वीर दधि दूर्वांकुरैः कुशैः गंधपुष्पोपहारैश्च ब्राह्मणानांच तर्पणैः। येतस्यां पूजयंतीह नागान्भक्ति पुरःसराः नतेषां सर्पतो वीर भयं भवति कुत्रचित्॥ **अथ भाद्रशुक्लपंचम्यामृषि पंचमी व्रतम्॥** तत्र वेद्यां सप्तर्षि पूजा, अकृष्ट भूमिजशाकाहारमात्रम् सर्व पाप क्षयः सर्व काम लाभः फलम्। अस्यामेव ब्रह्मपुराणोक्तं सर्प दष्टोद्धार व्रतम्। दष्टस्य दुर्गति परिहाराय पुत्रादिभिः कार्यमेतत् सौवर्णं राजतं वा नागं पूजयेत। विप्र पूजा गोदानम्, नक्त करणम्, प्रतिमादानम् फलं दष्टोद्धारः। व्रतकर्त्तुर्विष्णु सलोकता॥ **अथाश्विन सित पंचम्यां भविष्योत्तरोक्तं शचीसहित नागपूजा व्रतम्॥** कुशमयं शची सहितं नागं घृत क्षीर जलैः संस्नाप्य क्षीर सिक्त गोधूमान्नं नैवेद्यं दद्यात् शेषादि नाग प्रीतिः फलम्॥ **अथ कार्त्तिक शुक्ल पंचम्यां भविष्योत्तरोक्तं जया व्रतम्।** जया सहित हरि पूजा। वेणुधान्यादिकं दत्त्वा रक्षा बंधनमाचरेत्। असताः सर्पपा दूर्वा रक्षा मध्ये च रोचना॥ ॐ येन बद्धो बली राजा दानवेन्द्रो महाबलः तेन

त्वां प्रोल रक्षासि रक्ष मा चल मा चलेति रक्षा मंत्रः ग्रह पीडादि शांतिः युद्धादि विजयः फलम् ॥ अस्यामेव वराह पुराणोक्तं शान्तिव्रतम् ॥ आब्दम रहितं भोजनम् रात्रौ शेषस्य हरि पूजनम् होमः अब्दान्ते उद्यापनम् नारा भय निवृतिः फलम् ॥ अथ मार्गसित पंचम्यां भविष्योत्तरोक्तं श्री पंचमी व्रतम् ॥ उपवासः स्वर्ण लक्ष्मी पूजा सुवासिनी पूजा । ब्राह्मणाय प्रतिमादानम् पारणम् वर्षान्ते समापनम् । फलमेक विंशत्यन्वयां तं गृहे श्री स्थिरता ॥ पुराण समुच्चये ॥ माघ मासे सुरश्रेष्ठ शुक्लायां पंचमी तिथौ । रति कामौ तु संपूज्य कर्त्तव्यः सुमहोत्सवः दानानि च प्रदेयानि तेन तुष्यति केशवः इयमपि श्री पंचमीति प्रसिद्धा वसंत पंचमीत्येके ॥ अथ षष्ठी निर्णयः ॥ सा च सर्वा परविद्धा ग्राह्या युग्म वाक्यात् । स्कान्दे नाग विद्धा न कर्त्तव्या षष्ठी चैव कदाचन सप्तमी संयुता कार्य्या षष्ठी धर्मार्थ चिंतकैः उपवासे स्कन्द षष्ठी भिन्ना सर्वा प्युत्तरैव स्कादस्य षृमी षष्ठी द्वितीया च चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विता इति भृगु वचनात् । नाग विद्धा तु या षष्ठी शिव विद्धा तु सप्तमी दशम्ये कादशी विद्धा नोपोष्या स्यात्कथं च नेति निषेधाच्च शिवोऽष्टमी स्कन्द षष्ठी तु पूर्वे वो पोष्या कृष्णाष्टमी स्कन्द षष्ठीति वाक्यात् ॥ अथ षष्ठी व्रतानि ॥ तत्र चैत्र शुक्ल षष्ठ्या मारभ्य माब्दं कालोत्तरोक्तं कुमार व्रतम् । उपवासः मृणमय षणमुख प्रतिमा पूजनम् । ब्राह्म्यादि रस प्राशनम् । मासि मासि कर्त्तव्यः अब्दान्ते समाप्तिः महाकवि मेधावी भवति ॥ आषाढ शुक्ल षष्ठी स्कन्द षष्ठी ॥ तत्र पंचम्यामुपोष्य षष्ठ्यां स्कन्दं पूजयेत् । आषाढे शुक्ल षष्ठी तु तिथिः कौमारिका स्मृते त्युक्त वाराह पुराण वचनात् । भाद्र शुक्ल षष्ठ्यां स्कन्दोक्त चम्पा षष्ठी व्रतम् ॥ षष्ठी भाद्रपदे

शुक्रा वैधृत्याच समन्विता। विशाखया भौम योगे नसा चम्पेती हविश्रुता। पंचम्या मेक भुक्तम् । प्रात र्व्रत संकल्पः ततो नद्यादौ मृदा शुक्रतिलैश्च स्नानम्। ततो मौनेन गृह मेत्य स्थरिडले कलश स्थापनम्। तत्र स्थित ताम्रादि पात्रोपरि सौवर्ण सूर्य्य पूजनम्। अरुणस्य शुक्र गोश्च पूजनम् तिलहोमः। द्वादश विप्रा नाशयेत् दक्षिणा गवां कोटि सहस्रेण कुरुक्षेत्रेर्क पर्वणि। चंपा दानस्य राजेन्द्र कलां नार्हन्ति षोडशी मिति फलम्

॥ भविष्योत्तरे ॥ येयं भाद्रपदे मासि षष्ठीस्याभ्द रतर्षभ सेयं पापहरा पुरस्यां शिवा शांता शुभा नृप। यस्यां पश्यंति गाङ्गेयं दक्षिणा पथमाश्रितम्। ब्रह्म हत्यादि पापैस्ते मुच्यंते नात्र संशयः इय मेव सूर्य्य षष्ठी ॥ तदुक्तं ॥ तत्रैव शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्कर पूजनम्। प्राशनं पंच गव्यस्य अश्वमेध फल प्रदम् ॥ अथ भाद्र कृष्ण षष्ठ्यां कपिला षष्ठी व्रतम् ॥ तदुक्तं वाराहे ॥ नभस्य कृष्ण पक्षे या रोहिणी पातभूसुतैः युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्त्तिता तत्र भास्करं पूजयेत् व्रती कपिलां दद्यात् अश्वमेध फलस्य पातो व्यतीपातः भूसुतो भौमः पुराण समुच्चये विशेषः भाद्रे मा[illegible] सिते पक्षे भानौ चैव करे स्थिते। पातेकुजे च रोहिण्यां सा षष्ठी कपिला भवेत्। सूर्य्यस्य हस्त स्थितत्वं सति संभवे। इयं च पूर्वा परा वा यैव भान्वादि चतुष्टय वती सैव ग्राह्या संयोगं सा चतुर्णां स्वे निर्दिष्टा परमेष्ठिनेति वचनात् ॥ इय मेव षष्ठी, चन्द्र षष्ठी चन्द्रोदय व्यापिनी ग्राह्या। उभय त्र तत्वे पूर्वैव तदुक्तम् तद्वत् भाद्र पदे मासि षष्ठी पक्षे सिते तरे। चन्द्र षष्ठी व्रतं कुर्यात् पूर्व वेधः प्रशस्य ते चन्द्रोदये यदा षष्ठी प्र वाहिण्यां परेऽहनि। चन्द्र षष्ठ्या सिते पक्षे सैवोपोष्या प्रयत्नतः ॥ आश्विने षष्ठ्यां, ज्येष्ठा सुतायां केवलायां वा बिल्वनि मंत्रणाम् मंत्रः। रावणस्य वधार्थाय रामस्यानुग्रहाय च। अकाले ब्रह्मणा बोधो देव्यास्त्वपि कृतः पु

रा श्रीशैल शिखरे जात श्री फल श्री निकेतन ने त्वयोसिमया गच्छ पूज्ये दुर्गा स्वरूपतः। कार्त्तिक शुक्ल षष्ठ्यां वह्नि महोत्सवं कुर्यात्॥ तदुक्तं मात्स्ये॥ वृश्चिकार्के शुक्ल षष्ठी भौमवारे ह्युपस्थिते महा षष्ठी तिसं प्रोक्ता सर्व पाप हरा तिथिः तस्यां स्वपिति वै वन्हिः पूर्वन्तो पोष्य वै दिने षष्ठ्यां वह्निं समभ्यर्च्य कुर्याद्वह्नि महोत्सवम्। वृश्चिकार्के कार्त्तिक इति काला दर्शः॥ अथ मार्ग सित षष्ठी स्कन्द प्रियायस्यां स्कन्दस्तारकं॥ जघान तस्यां स्नान दानादिक मक्षयं भविष्योत्तरात्। अस्यामेव दक्षिणा पथ गंगां गेयं पश्ये दिति राम कृष्णाः श्रीकामः सर्वासु षष्ठीषूपवसेत्॥ यदुक्तं भविष्ये॥ षष्ठ्यां हि श्री समायुक्तो यस्मा स्कन्दो भवत्पुरा। तस्मात्षष्ठ्यां न भुंजीत प्राप्नुयाद्भार्गवीं सदा। भार्गवी लक्ष्मीं यस्तु षष्ठ्यां नरो नक्तं कुर्याद्भरतसत्तम। सर्व पाप विनिर्मुक्तो गाङ्गं यस्य सदो व्रजे दिति षष्ठ्या मुपवासः॥ दारि द्र्य हर षष्ठी व्रतम्॥ स्कन्द पूजा ब्राह्मण भोजनादि॥ अथ विष्णु धर्मोक्तं पुत्र प्राप्ति व्रतम्॥ कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा। क्रतुराज्ञा विनिर्दिष्टो भगवान् क्रौञ्च सूदनः तमभ्यर्च्य नरः षष्ठ्यां पुत्राना प्नोत्यभीप्सितान्। बालकानां गृहे श्रेयो नरः प्राप्नोत्य संशयम्॥

## अथ सप्तमी निर्णयः॥

सप्तमी च सर्वा पूर्व विद्धैव ग्राह्या युग्म वाक्यात्। षष्ठ्या युता सप्तमी च कर्त्तव्या तात सर्वदा। षष्ठी च सप्तमी यत्र तत्र संनिहितो रविरिति स्कान्दात्। सप्तमी नाष्टमी युक्ता न सप्तम्या युताष्टमी सर्वेषु व्रत कल्पेषु अष्टमी परतः शुभेति ब्रह्म वैवर्त्त निषेधाच्च षष्ठ्ये कादश्य मावास्या पूर्व विद्धा तथाष्टमी सप्तमी पर विद्धा च नोपोष्य मिति पंचकम्। इति

स्कन्दनिषेधाच्च॥ भविष्ये॥ षष्ठी समेता कर्त्तव्या सप्तमीनाष्टमीयुता। पतङ्गोपासनायेह षष्ठ्यामाहु रुपोषणमिति विधेः षष्ठीयुता ग्राह्या पतंगः सूर्य्य शिवु विद्धो दिवाकर इत्युक्तिनिषेधाच्च अष्टमीयुतात्याज्ये त्यलं प्रपंचेन॥ गौडास्तु॥ आश्विनशुक्ल सप्तमी देवी प्रवेशादे द्वितीयैव ग्राह्या, तथा च भविष्योत्तरे॥ युगाद्या वर्षवृद्धिश्च सप्तमी पार्वती प्रिया रवे रुदयमीक्षन्ते नतासूतिथियुग्मतेति। वर्षवृद्धिर्जन्म दिनमिति वदंति एतस्यवाक्यस्य निर्णयामृतादिषदर्शनाद्धीत्यायतेमनः

# इति सप्तमी सामान्य निर्णयः॥

## अथ सप्तमी विशेषाः देवी पुराणे॥

चैत्रशुक्ल पक्ष प्रक्रमे भास्करस्य च सप्तम्यां पूजां दमनकादिभिः कृत्वा प्राप्नोति भोगादीन् विगतारिर्महातपाः॥ चैत्रशुक्ल सप्तम्यामेव विष्णु धर्मोक्तं सूर्य व्रतम्॥ सूर्य पूजा होमः आब्दं व्रतम्, व्रतान्ते गोदानम्, सर्वकामाप्तिः सूर्य सालोक्यम्। द्वादशाब्दं करणे विष्णु सायुज्यम्॥ वैशाख शुक्ल सप्तम्यां निम्ब सप्तमी व्रतम् तदुक्तं भविष्योत्तरे॥ तृतीयां सप्तमीश्वीर तच्छृणुष्वाग्रतोमम निम्ब पत्रैः कृतायातु पाप घ्नी शोक नाशिनी। अस्यामेव पाद्मोक्तं शर्करा व्रतम्। प्रातः शुक्लतिलस्नानम् कुंभस्थापनं तत्र पूजा रात्रौ पंचगव्य प्राशनम्। अष्टम्यां दक्षिणा वार्षिकं व्रतम् प्रातः शर्करादानम्। शर्करा सप्तमी चैषा वाजिमेध फल प्रदा सर्व दुःख प्रशमिनी पुत्र संतति वर्द्धिनी॥ ब्रह्मपुराणे॥ आषाढ शुक्ल सप्तम्यां विवस्वान्नाम भास्करः जातः पूर्वस्तु तस्मात्त्वं तत्रोपोष्य यजेत्सदा रथ चक्राकृतौ

रम्ये मंडले सर्वकामदम्। भक्ष्यै र्भोज्यैस्तथा पेयैः पुष्पै र्धूप विलेपनैः ॥ भाद्र सित सप्तम्यां भविष्योत्तरोक्तम मुक्ताभरण सप्तमी व्रतम् ॥ शिवाम्बिकयोः पूजा वेणु पात्रादि दानम्। सौवर्ण डिोरक धारणम् संतति वृद्धिः विशेषेण मृत वत्साया व्रत मिदम्। आश्विन शुक्ल सप्तम्यां स मूलायां केवलायां वा पूर्व निमंन्त्रित फलद्वय युक्त बिल्व पत्रिकामानीय तया सह देवीं पूजयेत्। तदुक्तं लिंग पुराणे मूलाभावे पि सप्तम्यां केवलायां प्रवेशयेत् युग्म भिन्नां च बिल्वस्य फलाभ्यां शाखिकां तथा तथा च प्रतिमां देव्याः स्नात्वाभ्युक्ष्य प्रवेशयेत्। पूजा च बिल्व पत्रै रेव कार्या सप्तम्यां पत्रिका पूजेति ब्राह्मण वचनादित्या वाह्य नाथः वस्तुतः पत्रिकेति पूज्याभिप्रायः अथ मार्ग शुक्ल सप्तम्यां पाद्मोक्तं फल सप्तमी व्रतम् ॥ कांचन फल दानम् भानु पूजा आब्दं व्रतम् अन्ते विप्र मिथुनं संपूज्य हेम पद्मयुत शर्करा कुंभ दानम् फलं सर्व पाप क्षयः सूर्य सालोक्यम् ॥ अस्यामेव ब्राह्मोक्तं मित्र सप्तमी व्रतम् ॥ मित्राख्य सूर्य्यस्य जन्म दिन मिदम्। मित्रस्य पूजा षष्ठ्याः स्नपन मुपवासः रात्रौ जागरणम् सप्तम्यां वपनं स्नानं रवि पूजा सप्तम्याम्। अष्टम्यां च मधु घृत पिष्टान्न भोजनम् फलं सूर्य तुष्टिः ॥ अस्यामेव भविष्योत्तरोक्तं नन्दा सप्तमी व्रतम् ॥ पंचम्या मेक भक्तं च षष्ठ्यां नक्तं प्रकीर्त्तितम्। सप्तम्या मुपवासं च कीर्त्तयंति मनीषिणः रवि पूजा पारणात्रयं पुत्राप्ति ॥ अथ माघ शुक्ल सप्तम्यां भविष्योत्तरोक्तं रथ सप्तमी व्रतम् ॥ षष्ठ्यां शुक्ल तिल स्नानम् सूर्यालये सूर्य पूजा। गृह मागत्य नित्य कृत्य करणा नन्तरम् तैल भोजनम् रात्रौ व्रत ग्रहणाम् प्रातः कांचन रथो परि सूर्य पूजा रात्रौ जागरणम् प्रातः कांचन रथं रक्त वस्त्र पे नृप दद्यात आरोग्यं पुत्रा वाप्तिः सूर्य सालोक्यं च ॥ माघ

शुक्ला सप्तमी अचला जयंती चोच्यते॥ सा चारुणोदयव्यापिनी ग्राह्या। भविष्योत्तरे माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचना। जयंती नाम सा प्रोक्ता सर्वपापहरा तिथिः॥ स्मृतिचन्द्रिकायाम्॥ सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी। अरुणोदयवेलायां तत्र स्नानं महाफलम्। तथा माघे मासि सिते पक्षे सप्तमी कोटिभास्करा। कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः। अत्राचारात्सप्तार्कस्य बदरस्य पत्राणि शिरसि कृत्वा स्नायात्। एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् मनोवाक्कायजं यच्च ज्ञाताज्ञाते तु ये पुनः इति सप्तविधं पापं स्नानान्मे सप्त सप्तिके। सप्तव्याधिसमायुक्तं हर माकरि सप्तमि इति मंत्रौ सूर्यसेन निबंधे लिखितौ। प्रतापमार्त्तण्डे तु यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु तन्मे रोगं च शोकं च माकरी हन्तु सप्तमीति। रोकं च शोकं चेति मैथिल हरिनाथादि निबंधे तत्र रोकं पापछिद्रं रोगमित्यर्थः॥ वाराहे॥ रविवारेण युक्तायां सप्तम्यां सुत्तरायणे। पुन्नामधेय नक्षत्रे पूजयेच्च दिवाकरम्। उत्तरायणे माघे पुन्नामऋक्षाणि हस्तानुराधापुष्यमृगपुनर्वस्वः। निर्णयामृते सोमवारे त्वमावास्या भानुवारे च सप्तमी अङ्गारकदिने प्राप्ता चतुर्थी वा चतुर्दशी षष्टिवर्षसहस्राणि तत्कर्त्ता लभते फलम्॥ चतुर्थी सिता चतुर्दशी त्वसिता। तथा षष्ठी सप्तमि संयोगे वारश्चेदंशुमालिनः। योगोयं पद्मकोनाम सहस्रार्कग्रहैः समः अत्रारुणोदये सप्तमीस्नानाद्गङ्गायां कोटिसूर्यग्रहणसमानफलम्। अरुणोदयवेलायां शुक्ला माघस्य सप्तमी गंगायां यदि लभ्येत कोटिसूर्यग्रहैः समेति विशेषवचनात्॥ अचलापदव्युत्पत्तिर्भविष्योत्तरे इन्दुमत्या वेश्याया उपाख्याने। कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम्। रात्र्यन्ते चालयेद्यास्त्वं दत्वा शिरसि दीपकम् माघस्य सित सप्तम्यामचलं

चालितं चयत् जलं मलानां सर्वेषां स्मृतं प्रक्षालनं ततः। अचलासप्तमी स्नानं कथितन्ते विशाम्पते सर्व पाप प्रशमनं सर्व सौभाग्य वर्द्धनम्॥ व्रत विधिरस्याम् षष्ठ्यामेकभक्तम् अचलजले स्नानम् महार जनरं जितवर्त्ति दीप दानं जले शिवोमा रवि पूजा। गृहमागत्य नक्तं भुंजीत रूप सौभाग्यादिः॥ अस्यामेवा दित्य पुराणोक्तं सप्तमी व्रतम्॥ माघ मासे तु शुक्लायां सप्तम्यां समुपोषितः। यः पूजयेत्तु मां भक्त्या तस्याहं पुत्रतां व्रजे॥ अस्यामेव भविष्योत्तरोक्तं कामदा सप्तमी व्रतम्॥ उपवासः सूर्य पूजा होमश्च॥ अस्यामन्य स्या चा शित सप्तम्यां धान्यव्रतम्॥ सूर्य्य पूजा सप्त धान्य दानम् नक्त भोजनम् संतान वृद्धिः॥ रवियुत सित सप्तम्यां पाद्मोक्तं कल्याणा सप्तमी व्रतम्॥ प्रातर्गोदुग्ध स्नानम् अक्षतैः पद्मं कृत्वार्कार्चा पारणा वर्षान्ते उद्यापनम्। स वत्सरस्य शिव सालोक्यम्॥ अस्यामेव विजया सप्तमी व्रतम्॥ पंचम्या मेकभक्तम् षष्ठ्यां नक्तम् सप्तम्या मुपवासः अष्टम्यां पारणा कलशस्थ रवि पूजा सप्तम्याम्। अब्दान्ते गौर्देया सूर्य सालोक्यं फलमिति संक्षेपः

## ।अथाष्टमी निर्णयः॥

तत्र शुक्लाष्टमी सर्वैव परविद्धा ग्राह्या शुक्ल पक्षेष्टमी चैवेति वचनात् युग्म वचनाच्च। दूर्वाष्टमी शुक्लापि पूर्वैवोपोष्या। दूर्वा चैव हुताशनीति वचनात् कृष्णा तु सामान्यतः पूर्वयुता ग्राह्या कृष्णा पक्षेष्टमी चैवेति वचनात्। उपवासे तु पक्षद्वयेप्यष्टमी परयुतैवेति ध्येयम् सप्तमी तु वेधाढ्यन्त्युत्तरं दिनम्। पक्षयोरुभयोरेष उपवास विधिः स्मृत इति नारदीय पुराणोक्तिवचनात्॥ यत्तु कृष्णपक्षेष्टमी चैवेति वाक्ये स्युपवास ग्रहणं तद्ध्युपवास विषयम्। रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिरिति वचनात्॥ यत्तु कृष्णाष्टमी तथा रंभा तृतीया वट पैतृकीत्यादि वचनं कृष्णाष्टम्याः। पूर्व विद्धो पादेयत्व विधायकं

तत्कृष्णजन्माष्टमीपरमिति प्रताप रुद्रः शेषं वक्ष्यते ॥ इत्यष्टमी सामान्यनिर्णयः ॥ अथ तद्विशेषाः लिङ्ग पुराणे ॥ अशोक कलिकाश्चाष्टौ ये पिबंति पुनर्वसौ। चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥ प्राशन मंत्रः ॥ त्वामशोक नराभीष्ट मधुमाससमुद्भव। पिबामि शोकसंतप्तो मामशोकं सदा कुरु ॥ अशोकाष्टमीयम् ॥ अस्यामेव भविष्य पुराणोक्तं संतानाष्टमीव्रतम्। उपवासः कृष्णपूजा रात्रौ कृष्णमंत्रजपादिः प्रातः पारणम् संतानवृद्धिः फलम् ॥ अस्यामाश्विन शुक्लाष्टम्यामिव देव्या महापूजा कार्या मार्कण्डेय पुराणे ॥ शरत्काले महापूजा क्रियते या च वार्षिकी तत्र वार्षिकीत्यनेन सांवत्सरिकी पूजा पृथगुच्यते। तेन सम्वत्सरस्यादौ चैत्र सित प्रतिपदारभ्याष्टमीपर्यन्तं क्रियमाणा पूजा लभ्यते। अतश्च शरद्वसन्तयोस्तुल्यवद्दुर्गोत्सवः कार्यः ॥ अथ वैशाखशुक्लाष्टम्यां व्रत विशेषः देवी पुराणे ॥ सहकारफलैः स्नानं वैशाखे ह्यष्टमीदिने। आत्मनो देवतां स्नाप्य मांसीजटामांसी सुगंध वाला वालक वारिभिः लेपनं फलं कर्पूरधूपं च सुगन्धिकम्। उपवासः केतकी चंपकादिना देवीपूजा। शर्करा क्षीर नैवेद्यम् कन्याविप्र भोजनम् ततः पारणा। सर्व तीर्थाभिषेक फलम् ॥ अथ ज्येष्ठ शुक्लाष्टम्यां ब्राह्मोक्तं शुक्ला देवीव्रतम् ॥ उपवासः शुक्लापूजा प्रातः पारणम्। शुक्ला प्रीतिः फलम् ॥ अस्यामेव भविष्योत्तरोक्ता शिव पूजा ॥ शिव सालोक्य फलम् ॥ आषाढ सिताष्टम्यां देवीपुराणोक्तं महिष घ्नी व्रतम्। हरिद्रा तोयेन स्नानम् तेनैव देवी स्नानम् पंचोपचार पूजा। कन्याविप्र भोजनम् दीप माला दानम् ततो भोजनम् ॥

॥ अथ श्रीकृष्णजन्माष्टमी ॥

प्रताप रुद्रीये। साचद्विविधा॥ शुद्धाविद्धा चेति तत्र सप्तमीयो ग रहिताशुद्धा। सप्तमीयुक्ता विद्धा तत्र शुद्धा त्रिधा समान्यूना अधिका चेति विद्धाप्येवं त्रिधा समा सूर्योदया त्सूर्योदय पर्यन्ता। ततोर्वाङ्नि-वृत्तान्यूना।सूर्योदयमतिक्रम्यप्रवृत्ता धिका तत्र शुद्ध समा शुद्धन्यूना चरोहि णीयोगा योगाभ्यां चप्रत्येक द्विधा शुद्धाधिकातु चतुर्द्धा पूर्वदिनएवरो-हिणीयुक् परदिनएव रोहिणीयुक् उभयत्र रोहिणीयुक् उभयत्रतद युक चेति एवं शुद्धाष्टविधा एवं विद्धसमा विद्ध न्यूना च रोहिणी युक्तत्वा युक्तत्वाभ्यां प्रत्येकं द्विधा विद्धाधिका व च्चतुर्द्धा एवं विद्धाप्यष्टधा उभयो र्मेलनेषोडश भेदा भवंति। सूर्य्यसेनीयेतु द्वावन्या वांतरभेदा वाहुः। अर्द्ध रात्रे रोहिणीयुक्ता ष्टमी जयन्ती नामएका। द्वितीया नवम्या रोहिण्या बुधसोमान्यतरेण युक्ता। इत्यमष्टा दश प्रकारा जन्माष्टमी॥ तत्र शुद्धयोः समन्यून रोहिणी सहित योस्तद्रहित योर्वा न विवादः द्वितीय दिनेऽष्टम्य भावात् एवं विद्धयो रपि समन्यून यो रोहिणी सहितयोस्त द्रहित योर्वा नवि-वादः रोहिणी साहित्यं चमुहूर्त्त मात्रेणापि ग्राह्यम्। मुहूर्त्त मपिलभ्यतेति व-चनात् शुद्धाधिका विद्धाधिका वा यदाऽन्यतरस्मिन्नेव दिने रोहिणी युक्ता त-दा सैव ग्राह्या। प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी। मुहूर्त मपिलभ्ये-त सोपोष्या सामहाफला। मुहूर्त्तमप्यहोरात्रे यस्मिन्युक्तं हि लभ्यते। अष्टम्यां रोहिणी ऋक्षं तां सु पुण्यामुपावसेदिति विष्णुरहस्य वचनादिति शुद्धाधि-का यदा पूर्व स्मिन्दिने। निशीथे रोहिणी युक्ता उत्तर दिने पितयुक्ता तदा पू-र्वैव ग्राह्या रोहिण्यामर्द्धरात्रे च यदा कृष्णाष्टमी भवेत तस्याभ्यर्चनं सौरेहं त्तिपापं त्रिजन्म जम् इति भविष्योत्तरवचनात्। पारणां च द्वितीयदिने ति-थिनक्षत्रवियोगे कुर्यात्। रोहिणी सहितासेयं विद्वद्भिः समुपोषिता वियो गे पारणां च कुर्मुनयो ब्रह्म वादिन इति तथा भान्ते कुर्य्या त्तिथेर्वापि शस्तंभा

त पारणां चेति। यदा तु शुद्धाधिका या दिनद्वये प्यर्द्धरात्रं विहाय रोहिणी योगस्तदापि पूर्वैव ग्राह्या तस्याः सकलाहोरात्रव्यापित्वात् प्रथमातिक्रमे कारणाभावाच्च कपालाधिकरणान्यायात्। प्रथमैव कार्य्या यदा तु शुद्धाधिका दिनद्वयेपि रोहिणी रहिता तदाप्यहोरात्रव्यापित्वात्पूर्वैव ग्राह्या दिवा वार्यदिवारात्रौ नास्ति चेद्रोहिणी कला। रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुता मितिवचनाच्च १ विद्धाधिका तु यदा पूर्वस्मिन्नेव दिने निशीथे रोहिणी युक्ता दिनान्तरे तु निशीथं विहाय रोहिणी युक्ता तदा पूर्वैव ग्राह्या सप्तमी संयुताष्टम्यां निशीथे रोहिणी यदि। भविता साष्टमी पुण्या यावच्चन्द्रदिवाकरा विति वन्हिवचनात्।८ यदा तु विद्धाधिकोत्तरस्मिन्नेव दिने निशीथे रोहिणी सहिता पूर्वदिने तु निशीथं विहाय रोहिणी युक्ता तदोत्तरेव ग्राह्या। मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके शशांके वृषराशिस्थे प्राजापत्यर्क्षसंयुते उपोषितोर्चयेत्कृष्णं यशोदां देवकीं तथेति भविष्योत्तरोक्तेः। यदा तु विद्धाधिका दिनद्वये प्यर्द्धरात्रे रोहिणी युग्दिनद्वयेप्यर्द्धरात्रं त्यक्त्वा रोहिणी युक् तदोत्तरैव ग्राह्या। वर्जनीया प्रयत्नेन सप्तमी संयुताष्टमी सऋक्षापि न कर्त्तव्या सप्तमी संयुताष्टमीति ब्रह्मवैवर्त्तात्। तथा सप्तमी संयुताष्टम्यां भूत्वाऋक्षं द्विजोत्तम। प्राजापत्यं द्वितीये न्हि मुहूर्त्तार्द्धं भवेद्यदि। तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरेति॥ निर्णयामृते॥ विद्धाधिका दिनद्वये रोहिणी युगपि पूर्वैव ग्राह्या अष्टयामिकमिति पारणाङ्गीभूत ब्राह्मणभोजन दक्षिणादिकं रोहिण्य ष्टम्यन्ति कर्म्यकर्मणापि विधीयमानं सम्पूर्णाया सिवक्रुतं महाफलं भवतीत्यर्थः इत्युक्तं तच्चिन्त्यम्। अथ शुद्धा विद्धा या ष्टमी अर्द्धरात्रे रोहिणी युक्ता सा जयंती त्युच्यते: प्राजापत्येन संयुक्ता कृष्णे नभसि चाष्टमी जयंती नाम सा प्रोक्ता साक्षुवैव्या महाफलेति त-

या अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत्। तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्। सोपवासो हरेः पूजां कृत्वा तत्र नसी दति तथा। रोहिणी सहिता कृष्णा मासि भाद्रपदेष्टमी। अर्द्धरात्रादधः सा हि कलामात्रा यदा भवेत्। तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः। तमेवोपसेत्कालं कुर्यात्तत्रैव जागर  म॥ तथा, अर्द्धरात्रे तु योगोयं तारापत्युदये सति। जयंती नाम सा रात्रिस्तत्र जातो जनार्द्दनः। नियतात्मा शुचिस्तत्र पूजान्तत्र प्रवर्त्तयेत्। नभसीति शुक्लादि मासमभ्युपेत्य भाद्रपद इति कृष्णादि मासमङ्गीकृत्य। अन्यत्रापि रोहिणी नाम नक्षत्रं जयंती नाम शर्वरी। मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः द्वयंच यत्रैवार्द्धरात्रे रोहिणी योगः सैवोपोष्या। यदा तु दिनद्वये प्यर्द्धरात्रे योगस्तदा तूत्तरैव। वर्ज्जनीया प्रयत्नेन सप्तमी सहिताष्टमी त्युदाहृत वचनात्॥ यदि तु सूर्य्योदये स्वल्पाष्टमी सा च रोहिणी युक्। उपरि समस्ता नवम्या शशिबुधान्यतरेण युक्ता सा जयंती मुक्तिदा सम्पूर्णाष्टमीं परित्यज्य स्वल्यापि सैवोपोष्या॥ पाद्मे॥ प्रेतयोनिगतानांच प्रेतत्वं नाशितं नरैः यैः कृता श्रावणे मासि अष्टमी रोहिणी युता किम्पुनर्बुधवारेण सोमेनापि विशेषतः किम्पुनर्न्नवमी युक्ता कुलकोट्यास्तु मुक्तिदा॥ स्कान्दे॥ उदये चाष्टमी किञ्चिन्नवमी सकला यदि। सा भवेद्बुधसंयुक्ता प्राजापत्यर्क्ष संयुता। अष्टवर्षशतेनापि लभ्यते वा न लभ्यते॥ अत्राहुः कृष्णाष्टमी द्विधा जन्माष्टमी जयंती च तत्र जन्माष्टमीव्रतम्॥ भविष्योत्तरे॥ सप्तम्यां लघुभुक् कुर्याद्दन्तधावनपूर्वकम्। उपवासस्य नियमं रात्रौ सुप्ता जितेन्द्रियः केवलेनोपवासेन तस्मिन् जन्मदिने मम। सप्त जन्मकृतात्पापान्मुच्यते नात्र संशयः॥ जयन्तीव्रतम् अग्निपुराणे॥ कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणीन्दय

जयन्तीनामसा प्रोक्ता उपोष्या तु प्रयत्नतः उपवासश्च तत्रोक्तो महापा
तकनाशनः तद्दिने पूर्वदेवक्याना राधितः किल। अष्टमी रोहिणीयु
क्ता निशार्द्धे दृश्यते यदि मुख्यकाल इति ख्यातस्तत्र जातो जनार्द्दनः
॥ जयन्त्यां चन्द्रार्घस्यावश्यकत्वात्तस्य चन्द्रोदयकालीनत्वान्निशी
थे रोहिणी योगः प्रशस्त इति भावः ननु जन्माष्टमी जयंती व्रतयोः कथं
भेदः अथ नित्यकाम्ययोरिव भेदोस्तु॥ तथाहि, नित्या जन्माष्टमी अकरणे
प्रत्यवाय श्रवणात्। गृध्र मांसं खरङ्काकं श्येनं वा मुनिसत्तम मांसं चाद्वि
पदां भुक्ते कृष्णा जन्माष्टमी दिने श्रावणे बहुले पक्षे कृष्णा जन्माष्टमी
व्रतम्। न करोति नरो यस्तु भवति क्रूर राक्षसः वर्षे वर्षे तु या नारी कृष्णा ज-
न्माष्टमी व्रतम्। न करोति महाप्रज्ञ हा व्याली भवति कानने इत्यादि काम्य
फल विशेष श्रवणात् बहु जन्म कृतं पापं हंति सा पोषिता तिथिः म-
हा जयाय कुरुतां जयंती मुक्तये नघ। धर्म मर्थं च कामं च मोक्षं च मुनि
पुङ्गव। द दाति वांछिता नर्थान्ना नार्थान नति दुर्ल्लभान्। इत्यादि बहु
विध फल बोधनादिति चेन्न अयं हि गुणविधिर्न तु पृथग्विधिः जन्मा
ष्टम्येव जयन्ती भूत्वा फलाधिक्य रूप गुणाय भवति गोदोहनवत् दध्या
दिवच्च यथा प्रकृतमेवायं त्वरायनमाश्रित्य पशुरूप फलाय गोदोहनम
त्रं विधीयते एव न्नित्याग्निहोत्रे फलाय दधि एवं नित्यां जन्माष्टमी
माश्रित्य फल विशेषाय रोहिणी योगो विधीयता मिति अत्रोच्यते।
जन्माष्टमी जयन्त्योर्भेदा नाम भेदात् जन्माष्टमी व्रते केवल तिथिनिमि
त्तम्। जयन्ती व्रते रोहिणी योग इति व्रत भेदात् जन्माष्टम्या मुपवासः केवलः
जयन्त्यां दानादि विशिष्टः स इति समारय ति हि केवलेनोपवासे न
तस्मिन् जन्म दिने मम शत जन्म कृतात्पापा न्मुच्यते नात्र संशयः इति
तस्मा ज्जन्माष्टमी व्रतो स्योपवास मात्रं स्वरूपं। तत्रापि जागरादि करणे

न दोषः जयन्तीव्रतस्य तु दानादिसहित उपवासः स्वरूपं समर्प्यते हि तु
ष्ट्यर्थं देवकीसूनोर्जयन्तीसंभवं व्रतम्। कर्त्तव्यं वित्तमानेन भक्त्या
भक्तजनैरपि एवं शुद्धमिश्रभेदाद्भेदः शुद्धं नित्यमात्रं जन्माष्टमीव्रत
म्। अकरणे दोषश्रवणात् जयन्तीव्रतं नित्यं काम्यं वेति मिश्ररूपम्। अ
कुर्वन् याति नरकं यावदिन्द्राश्चतुर्दश। शूद्रान्नेन तु यत्पापं शठहस्त
स्य भोजने। तत्पापं लभते कुंति जयंतीविमुखो नर इत्यादि वाक्यान्नि
त्य जयंतीव्रतम्। फलश्रवणाच्च काम्यम्। न च नित्यानित्यसंयोग
विरोधः। संयोगः पृथक्त्वन्यायेनोपपत्तेर्निर्देशादपि व्रतभेदः॥ तथा
च भृगुः॥ जन्माष्टमी जयंती च शिवरात्रिस्तथैव च। पूर्वविद्धैव कर्त्त-
व्या तिथिभान्ते च पारणम्। अनुष्ठानभेदादपि भेदः अन्यथा यस्मिन्न
ब्दे नवम्यां रोहिणीयोगस्तत्र जन्माष्टमीलोपः स्यात्॥ अतोऽपि ज-
यन्त्यभावेऽपि क्रियत एव जन्माष्टमी नन्वेवं सति यदा दिनद्वये ऽप्यर्द्धरा
त्रेऽष्टमी रोहिणी तूत्तरदिन एव तत्र पूर्वदिने जन्माष्टम्युपवासः परदि
ने जयंत्युपवासद्वयं प्रसज्जेतेति चेन्न रोहिणीयोगे सति जयंतीव्रत
एव जन्माष्टमीव्रतान्तर्भावसंभवात् सर्वत्र गुणवन्नक्षत्रसंयोगाभा
वे केवलतिथेरपेक्षणीयत्वात् गुणविकृतित्वादपि भेदः जयंती जन्मा
ष्टम्या गुणविकृतिः। दर्शस्य शाकप्रस्थापीयंकवत् यथा दर्शस्य सर्वप्र
योगाः शाकप्रस्थापीय केभेदस्तु दर्शयागं शांताज्यहविषो दधि
पयसोः पृथगेव दानम् शाकप्रस्थापीये सहैवेति। तथा जन्माष्टम्या
मुपवासो जयंत्यां दानादेरधिको गुणोऽभिधीयते अतो जयंती गुण
विकृतिः आश्रयाश्रयीभावादपि भेदः जन्माष्टमीमाश्रित्य रोहिणी
योगनिमित्तकदानादिविधानात् यथा ज्योतिष्टोमस्याश्रयः॥ ॐ एत-
स्याङ्गान्युद्दीथादीनि तं चोद्गीथमाश्रित्योपासनानि विहितानि ॐ मित्ये

काक्षरमुद्गीथमुपासीतेतिकृतमप्रकृतेन। वयन्तुब्रूमःन्यैवरोहिणी युक्ता जयन्तीत्युच्यतेसैवमुख्या जन्माष्टमीरोहिणीनाम नक्षत्रंजयन्ती नामशर्वरी मुहूर्त्तो विजयोनामयत्रजातोजनार्द्दनः इत्यादिभूरि वचनेभ्यः तस्माद्विशिष्टाभावेकेवलाप्यष्टमीकर्त्तव्येतिउभयोर्वैशिष्ट्यावैशिष्ट्यभेदके। ननुव्रतयोर्भेदइतिकर्त्तव्यता भेदाभावाद्देवताभेदाभावाच्चेतिव्रतद्वयत्वेचोपवासद्वयंवज्रलिप्तंस्यादिति॥ अथपारणानिर्णयः॥ विष्णुधर्मे जयन्तीशिवरात्रिश्चकार्य्येभद्राजयान्विते कृत्वोपवासन्तिथ्यन्तेतथाकुर्य्याञ्चपारणम्॥ ब्रह्मे॥ कुर्य्याद्विद्वापिसप्तम्यारोहिणीसहिताष्टमी। तत्रोपवासङ्कुर्वीत तिथिभान्तेचपारणम्॥ ब्रह्मवैवर्त्ते॥ अष्टम्यामथरोहिण्यां नकुर्य्यात्पारणं क्वचित्हन्यात्पुराकृतंकर्मउपवासार्ज्जितंफलम्। तिथिरष्टगुणं हन्तिनक्षत्रंतुचतुर्गुणम्। तस्मात्प्रयत्नतःकुर्यात्तिथिभान्तेचपारणम्॥ ब्रह्मवैवर्त्ते॥ सर्वेष्वेवोपवासेषुदिवापारणमुच्यते अन्यथा पुण्यहानिःस्याद्विनाधवणपारणम्॥ गारुडे॥ अन्यतिथ्यामसौरत्रौतामसैस्तेजसोपिवातामसेपारणंकुर्वंस्तामसीगतिमाप्नुयात्॥ नारदीये॥ तिथिनक्षत्रसंयोगेउपवासोयदाभवेत्। पारणंतुनकर्त्तव्यंयावदेकस्यसंक्षयः तिथ्यृक्षयोर्यदाच्छेदोनक्षत्रान्तमथापिवा। अर्द्धरात्रेथवाकुर्य्यात्पारणंत्वपरेऽहनि॥ इतिहेमाद्रिलिखितवचनम्। अस्यार्थोनिर्णयामृते। तिथिनक्षत्रान्तेअन्यतरक्षयेवादिवापारणंकुर्य्यात। यद्यर्द्धरात्रेतिथिभान्तस्तदाअपरेऽहनिदिवसेएवपारणंकुर्यात्। निशिपारणानिषेधादर्द्धरात्रेभोजननिषेधाच्चेतितन्नसम्यगितिब्रूमः अर्द्धरात्रेथवाकुर्य्यात्पारणम्। अर्द्धरात्रेपितिथिभान्ताभावोपरिकुर्यात इत्यर्थात्। नरात्रौपारणंकुर्यादृतेवैरोहिणीव्रतात्। तत्रनिश्यपितत्कु-

र्य्यां द्वूर्जे यित्वा महा निशाम्। इति वचने महा निशा निषेधस्तद्वर्वाक पारणाकाल सत्वेपि वोध्यः। अन्यथा निशीथ पारणा विधायक वचन विरोधादिति। अशक्तस्तु दिवा तिथिभान्ता भावेपि नृत्य गीतादि रूपोत्सवांते पारणां कुर्यात्। जयंत्यां पूर्व विद्धाया मुपवासं समाचरेत्। तिथ्यंते चोत्सवांते वाव्रती कुर्यात्तु पारणा मिति कालादर्शे निवंध वचनादिति। एतच्च स्त्री नृसाधारणम्। प्रतिवर्ष विधानेन मद्भक्तो धर्म नन्दन। नरो वाप्यथवा नारी यथोक्त फल माप्नुया दिति भविष्योत्तरादि वचनादिति। अथ भाद्र सिताष्टम्यां भविष्योत्तरोक्तं दूर्वाष्टमी व्रतम्॥ शुक्लाष्टमी तिथिर्या तु मासि भाद्र पदे भवेत्। दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सामिधीयते। उपवासः फलाहारो वा दूर्वा पूज्या दूर्वाभि र्विविध फलैश्च शिव पूजा विप्रेभ्यः फलादि दानम्। ब्रह्म हत्यादि पापक्षयः फलम्। स्त्री व्रत मिदम्। प्रति वर्षं वधू जनै रिति वचनात्। अत्र दूर्वा पूजाया अकरणे दोषः॥ पुराण समुच्चये॥ या न पूजयते दूर्वां मोहादिह यथा विधि त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः॥ तथा दूर्वा मभ्यर्च्य भक्त्या ज्येष्ठां मूलं च वर्ज्जयेत्॥ स्कान्दे॥ शुक्ले भाद्र पदे मासि दूर्वा संज्ञा तथाष्टमी। सिंहार्के सा च कर्त्तव्या कन्यार्केन कदाचन। अगस्त्य उदिते तात पूजये त्ता मृतोद्भवाम् अमृतो द्भवां दूर्वाम् कर्त्तव्या चैक भक्तेन ज्येष्ठा मूलाभावे उपवासो गते ऽ न ग्नि पक्वाशनं वा कार्य्यम्। दूर्वा पूजा मध्यान्हा दुपरि कार्य्या मुहूर्त्ते रौहिणे ष्टम्यां दूर्वा वा यदि वा परा दूर्वाष्टमी तु सा कार्य्या ज्येष्ठां मूलं च वर्जयेत्। अत्र परविद्धा निषेधेपि परविद्धा विधानम्। पूर्वस्यां ज्येष्ठा मूल युक्तायां परस्यां कर्म काल व्यापिन्यां परापि कार्य्येति ज्ञापनार्थम्। कालादर्शे भाद्र शुक्लाष्टमी ज्येष्ठा नक्षत्रेण समन्विता महती कीर्तिता तस्यां ज्येष्ठां देवीं प्र पूजयेत उपहारै र्बहु विधै र लक्ष्मी वि-

निवृत्तये॥मात्स्ये॥प्रत्याब्दिकं तिथावुक्तं य ज्ज्येष्ठा दैवतंव्रतम।प्रतिज्ये
ष्ठाव्रतं यच्च विहितं केवलोडुनि तिथावेवाचरेदाद्यं द्वितीयं केवल र्क्षतः
प्रतिवर्षं क्रियमाणं ज्येष्ठाव्रतं ।नक्षत्राभावे तिथावेव केवलायां कार्य्यं
ज्येष्ठा युक्तायामेव तिथौ ज्येष्ठा प्राधान्येन यत् क्रियते तत्तिथि नक्षत्रयो-
गाभावे केवल नक्षत्रे कार्य्य मित्यर्थः अथास्यामेवा स्यामिना ष्टमी पर्यन्तं
स्कान्दोक्तं महालक्ष्मी व्रतम्।महा लक्ष्मी व्रतन्तत्र यस्या मुदयते शशी।*
यस्या मुदयते भानुः साभवेज्जीव पुत्रिकेतिमनूक्तेःअविशेषः कथायाम।इदंव्र
तं ज्येष्ठा युक्ता ष्टम्या मारब्धव्यम् ज्येष्ठाभावे केवलायाम्। समापनञ्च
न्द्रोदय व्यापिन्याम्। चन्द्रोदय व्रते चैव तिथिस्तात्कालिकी स्मृता इ
त्युक्तेः उभयत्र तद्व्यापित्वे पूर्वस्याम्।कृष्णा पक्षे ष्टमी चैवेत्युक्तेः उत्तर
दिने चन्द्रोदयोत्तर मुहूर्त्तत्रय व्यापिनी चेदुत्तर स्याम् पूर्वावा पर विद्धा
वा ग्राह्या चन्द्रोदये सदा। त्रिमुहूर्त्ता तु विज्ञेया परतश्चोर्द्ध गामिनीति
वचनात् कन्या गतेर्के प्रारभ्य कर्त्तव्यं न श्रियोऽर्चनम हस्त प्रान्त दल
स्थेऽर्के तद्व्रतं न समापयेत्। अर्द्धरात्र मतिक्रम्य वर्त्तते योत्तरा तिथिः
तदा तस्यां तिथौ कार्यं महा लक्ष्मी व्रतं शुभम्। तथा पूजनीया प्रयत्ने-
न अष्टमी प्राष्टृषि श्रियः दोषैश्चतुर्भिः संत्यक्ता सर्व संपत्करी तिथिः दोष
चतुष्टयम् नवमी वेधः १ रवेर्हस्तोत्तर दलगतत्वम् २ त्रिस्पृगि दिनम् ३ अ
वम दिनं चेति ४ पुत्रहा नवमी विद्धा स्वघ्नीहर्स्तोर्द्ध गे रवौ। कर्मघ्नी
त्रि दिने प्रोक्ता त्याज्या चैवा वमे पिवा। दोष चतुष्टय वर्जन मुपक्रमो
द्यापनयोरेव। अत एव षोडशाब्द पर्यन्तं नैरन्तर्य्येणाकुर्वन्ति तथा
चोक्तम्। श्रियोर्चनं भाद्रपदे सिताष्टमीं प्रारभ्य कन्या मगते च सूर्येस
मापयेत्तत्र तिथौ ह्रिया वत्सूर्यस्तु पूर्वार्द्ध गतो युवत्याः शक्तौ सत्यां=

* जीवत्पुत्रिका व्रतमपिच्चत्रैव कुर्वन्ति परविद्धामित्यर्थः॥

दोषः परिहार्य्यः अपरिहार्यत्वेन मध्येव्रत लोपः नवमी वेध निषेधेपि चन्द्रोदया दर्वाग्बोध्यः चन्द्रोदया दूर्द्ध त्रिमुहूर्त्तव्यापिनी नवमी विद्धैव ग्राह्येत्युक्तम्॥ अथाश्विन सिताष्टमी निर्णयः॥ सा च दुर्गोपवासा हि षु नवमीयुतैव ग्राह्या। वसुरन्ध्र योरितियुग्म वाक्यात्। तथा च नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमी युता। नवम्या सह कार्यास्यादष्टमी सर्वदा बुधैः। तथाष्टमी नवमीयुग्मे महोत्साहे महोत्सवः। तथा अष्टम्यां सनवम्यां च जगन्मातरमम्बिकाम्। पूजयित्वाऽऽश्विने मासि विशोको जायते नरः इति नवमीवेध प्रसंशा वचनानि। अथ सप्तमीवेधे निन्दा वचनानि पुत्रान्हंति पशून्हन्ति हन्ति राज्यं स राष्ट्रकम्। हन्ति जातान जातांश्च सप्तमी सहिताष्टमी। तस्मात्सर्व प्रयत्नेन सप्तमी वेध संयुता वर्जनीयाष्टमी चात्र शुभे राज्य मभीप्सुभिः सप्तमी शल्य संयुक्ता वर्जनीया सदाष्टमी स्तोकापिसा तिथिः पुण्या यस्यां सूर्योदयो भवेत्। शरन्महाष्टमी पूज्या नवमी संयुता सदा सप्तमी संयुता नित्यं शोक संताप कारिणी। तथा जम्भेन सप्तमी युक्ता पूजिता तु महाष्टमी इन्द्रेण निहतो जम्भस्तदा दानव पुङ्गवः सप्तमी शल्य संयुक्ता मोहादज्ञान तोपि वा महाष्टमीं प्रकुर्वाणो नि रये परिपच्यते। तथा नवमी च सदा देव्या मूर्त्ति र्दैत्य विनाशिनी। अत एव हि पूज्या स्यादष्टमी नवमी युता॥ इति निर्णयामृत राजमार्त्तण्ड हेमाद्रिकालादर्शक्षेम प्रकाशि निबन्धेषु लिखितानि वचनानि दर्शितानि दर्शनीयानि च भोजराजीये भीम पराक्रमे। न दिवा न निशापि च विष्टि हतान च सप्तमि शल्य तमोपहता यदि चाष्टमशेषयुता नवमी त्वमरैरपि पूज्यतमा नवमी अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत्। कुजवारा भक्तेत्र पूजनीया प्रयत्नतः। तथा आश्वयुक शुक्लपक्षे तु याष्टमी मूल संयुता पूर्वषाढया सार्द्ध मृक्षद्वय युता च वा सा महानवमी प्रोक्ता त्रैलो-

क्येपि सुदुर्लभा। कन्यांगते सवितरि शुक्लपक्षेऽष्टमीयुता। मूलनक्षत्रसं-
युक्ता सा महानवमी स्मृता। आभ्यामष्टमीनवम्यो र्युग्मता सूचिता मूल
संयुक्तापि सप्तमी लेशसहिताचेद्दुष्टैव॥ यदुक्तं दुर्गोत्सवे॥ मूलनापिहि
संयुक्ता सदात्याज्याष्टमीबुधैः। लेशमात्रेण सप्तम्या अपिस्याद्दूषिताय
दि॥ देवीपुराणे॥ संतर्पयंती हुंकारैः खड्गे खात परापरा। नवम्यां
पूजिता देवी दद्यादानन्दजं फलम् सापुराया सा पविवा च सा धस्या सुख
दायिनी तस्यां संपूजनी यातु चामुण्डा मुण्ड मालिनी॥ रूपनाराय-
णीये॥ मूले संपूजयेद्देवींतथास्तलिलदैवते। वैश्वदेवेतु नक्षत्रे पूजिता
दुःखदा भवेत्॥ वैश्वदेवे उत्तराषाढ्याम्। उत्तराषाढ निषेधः सति संभ
वेत्तदुक्तं, मूलाभावे च कर्त्तव्या अष्टमीतोय संयुता विश्वयुक्ता च कर्त्तव्या
अष्टमीनवमीयुता, तोयं पूर्वाषाढा, विश्वमुत्तराषाढा, ग्रंथांतरे विशेष
उक्तः, मूले नागमनं देव्याः पूर्वाषाढा सुपूजनम्। उत्तरा सुवलिं दद्या
च्छ्रवणे चापराजिता सूर्योदये परं रिक्ता पूर्णा स्याद् परायदि वलिदानं प्र
कर्तव्यं तत्र देशः शुभावहः रिक्ता नवमी, पूर्णा दशमी वलिदाने कृतेऽष्ट
म्यां पुत्रभंगो भवेन्नृप। तथा अष्टम्यामुदिते सूर्ये दिनांते नवमी भवेत्। प्र
भाते वलिदाने च कियन्मात्रा पि लभ्यते। नवम्यां तत्र संपूज्या दुर्गा दु-
र्गार्त्ति नाशिनी। उदयगामिन्यामष्टम्यामुपवास पूजादिकम्। उदय
गामिन्यां नवम्यां वलिदानमिति पर्यवसितं। नन्वत्र विरुद्धानि वाक्या
नि श्रूयंते॥ तथाहि अहं भद्राच भद्रा च नावयोरंतरं क्वचित्। सर्वसि-
द्धिं प्रदास्यामि भद्रायामर्चिता ह्यहम्। भद्रायां भद्रकाल्याश्च मध्ये
स्यादर्चनक्रिया। तस्मात्सप्तमी विद्धा कार्या दुर्गाष्टमी बुधैः। तथावि
ष्टिंत्यक्त्वा महाष्टम्यां मम पूजां करोति यः तस्य पूजाफलं नस्यात्तेना
हमयमानितेत्यादीनिति चेत्सत्यम्॥ सप्तमीविद्धा विधायक

वचनान्यग्रिमदिने ऽष्टम्यभावकविषयकानि॥तदुक्तंस्मृतिसंग्रहे॥
यदा सूर्योदयेनस्यान्नवमी चापरेऽहनि तदाष्टमींप्रकुर्वीत सप्तम्या सहितांनृप
नचसप्तम्यासुदिते सूर्ये परतश्चाष्टमीभवेत्। तत्रदुर्गोत्सवंकुर्यान्नकुर्याद्यपरेऽह
नि दुर्भिक्षं तत्र जानीयान्नवम्यां यत्र पूज्यते। इत्यादीनि परदिने ऽष्टमीलाभे-
पिसप्तमीविद्धाविधायकानीति वाच्यम्। तेषांनवमीक्षयविषयत्वात्॥त
दुक्तंस्मृतिसंग्रहे॥ यदा सूर्योदयेनस्यान्नवमी चापरेऽहनितदाष्टमीं
प्रकुर्वीतसप्तम्या सहितांनृप॥ दुर्गोत्सवेपि॥ उत्तरास्तिथयो यत्र क्षयं
यांतिपरेऽहनि पूर्वाष्टमींतदाकुर्यादन्यथात्वशुभंभवेत्। सूर्यसेनमहीपा-
लनिबंधे तुनवमीयुक्ताष्टमी निषेधकवाक्यानि कृष्णपक्षे नवम्यांविहितदे
वीप्रबोधे तदङ्गत्वेन क्रियमाणकृष्णाष्टम्यधिकरणकदेवीपूजाविषयाणि
कृष्णपक्षे ऽष्टमी चैव कृष्णपक्षे चतुर्दशीत्यादिवाक्यैः कृष्णाष्टम्याः पूर्व
विद्धाया एवप्रसक्त्याभिधानाद्विश्वरूपनिबंधविरोधाभावः। नचरूप
नारायणनिबंधेतु अष्टमीसामान्यनिर्णयवाक्यान्येवलिखितानि न महा
ष्टम्या विशेषनिर्णय इति वाच्यम्। अश्वयुक् शुक्लपक्षेतु याष्टमी मूलसंयुते
ति। तथा मूलेनापिहि संयुक्तेत्यादिवाक्ये विशेषनिर्णयकरणात्। अश्वयु
गितिकन्यागत इत्यादिविशेषलिंगैर्महाष्टम्या एवप्रतिपादनादिति॥त-
च्चानन्तभट्टीयादिषु महाष्टम्यादिषु विशेषनिर्णयो नकृतः तेषांग्रंथकृत
मियंशैली सामान्यनिर्णयप्राप्तानां विशेषनिर्णयप्रयासो न क्रियत इति
। तस्माद्वसुरंध्रयोरित्यादिसामान्यवाक्यनिर्णीता या महाष्टम्या निर्ण-
यार्थं व्यर्थविशेषवाक्यप्रपंचेनेत्यनन्तभट्टादीनामभिप्रायः॥ ननु भवि-
ष्योत्तरे॥ तत्राष्टम्यांभद्रकालीदक्षयज्ञविनाशिनी। प्रादुर्भूता महाघोरा यो-
गिनीकोटिभिः सहेति अत्र अहनीति दिवा। पूजाविधीयते। तथा निशायांपू
जितादेवी देवानां पापनाशिनी तस्मात्सर्वप्रयत्नेन अष्टम्यांनिशिपूजयेत्॥

तथा महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी। सप्तम्या संयुता का-
र्य्या मूले न तु विशेषतः इत्यादि वाक्ये र्विविध पूजाया विधाना। निशि पू-
जायां सप्तमी विद्धा दिवा पूजायां नवमी विद्धा द्रियतामिति चेभ्द्रान्तोसि सप्त
मी विद्धा विधायक वचनानां तिथिक्षय परत्वादि युक्तम्। किमत्रवि निगम
कमिति चेत्सत्यं। महाप्रामाणिक वि निबंध लिखितयोः स्मृति संग्रह दुर्गो
त्सवयो र्वचने नेह। सूर्योदये यदानस्यान्नवमी चापरेहनि तदाष्टमीं प्रकुर्वी
त सप्तम्या सहितां नृप। उत्तरास्तिथयो यत्र क्षयं यांति नराधिप। पूर्वाष्टमीं
तदा कुर्यादन्यथात्व शुभं भवेत् इति नव तु वचनाभावाग्दौर वादुपवासद्व
य कल्पना कल्पनैव। न च ते ना हम पमानि तेति निषेध वचनस्य निर्विष
यत्वापत्तिः तिथि क्षय विषयत्वात्॥ **अयमभिप्रायः॥** अष्टमी क्षय
वशात्सप्तमी विद्धाष्टमी प्राप्तौ विष्टिभि यादि देव पूजायै नत्यज्यते ते नाह
मप मानि तेति। तस्मादेकस्या मेवाष्टम्यां दिवा पूजा निशीथ पूजयोरुभ-
योरपि करणे लाघवं तिथिद्वय करणे गौरवमिति। यत्वानन्दकर दीपि
ति स्वकृते विश्व रूप निबंधानुसारिणि दैत्य नारायण निबंधे लिखित
म॥ **अष्टमीव्रतं तु रात्रिव्रतम् तत्र देवी पुराणे॥** रवा विषे तु
कन्यास्थे शुक्लाष्टम्यां प्रपूजयेत्। सोपवासे निशार्द्धे तु महाविभव विस्तरैः
पूजां समाम्भे भक्त्या नक्षत्रे वारुणेपि च पशु घातश्च कर्त्तव्यो गवलाज व
धस्तथा। बलि क्षयं सुरेशानां कृत्वा सर्वां निशां नयेत्। इषे आश्विने गवलो
महिषः॥ **अजश्छागः तथा भविष्ये॥** सोपवासे ह्ययं माल्ये रात्रि
जागरणे नच उपोषणमथाष्टम्यां साष्ट शक्तेश्च पूजनम्। नवम्या सुग्रचं
डायास्तद्वद्देवार्चनं दिवा। पूजा च बलि दानञ्च रात्रौ मातॄः प्रपूजयेत्॥
**पाद्मे॥** कुलं पुत्रं पशून् राज्यं वीर्य मायुस्तथैव च प्रथमा चाष्टमी पूजा
यांछित्वेय आत्मनः दुर्भिक्षं तत्र जानीया न्नव वर्षाणि पंच चा प्रय।

ज्या चाष्टमी यत्र नवमी सहितानृप ॥ **भविष्ये** ॥ देवी निवेदनं यत्र नवस्यां च नराधिप राजपीडा भवेत्तत्र वलप्राणप्रणाशिनी ॥ **देवीपुराणे । ब्रह्मोवाच** ॥ आश्विने मासि मेघांते महिषादिनिवर्हिणीम् देवीं च पूजयित्वा तु अर्द्धरात्रेष्टमीषु च घातयित्वा पशून्भक्त्या ते भवंति महावलाः वलिं चैव प्रयच्छंति सर्वभूतविनाशकम् तेषां वै तुष्यते देवी यावत्कल्पं तु शांकरीत्यादिवाक्यस्वरसात्सप्तमी विद्धैव ग्राह्येति । तथा महाष्टम्यां भगवती भद्रायामपि पूजिता ददाति चतुरारोग्यं यतो भद्रास्वरूपिणी त्यादि वाक्यपर्यालोचने या पूर्वविद्धैव लभ्यते रात्रिपूजैव च लभ्यत इति तुच्छतरम् रात्रिपूजाविधायकवाक्यानां सति संभवेऽतिप्राशस्त्यपरत्वात् पूर्णाष्टम्यां दिवापि विष्टिसंभवाद्दिवा रात्रिविहिते पूजाद्वयेऽवश्यकरणीये विष्टेर्दोषत्वगुणत्वकरणाकथनादुक्तयुक्तेश्चेति दुर्भिक्षितत्र जानीयादित्यपि षष्टिदंडात्मिकायामष्टम्यामग्रिमदिने च घटिकात्मिकायां नवमीविद्धायामपि पूजादिकं न कर्त्तव्यमित्येवं परम् पूर्वदिन एव दिवा रात्रिपूजयोः काललाभात षष्टिदंडो द्वत घटिका दे । ज्योतिशास्त्रे तिथिमलात्वाभिधानादिति । अन्यथाष्टमी नवमी युक्ता नवमीनाष्टमी युता । अर्द्धनारीश्वरप्राया तिथि सर्वव्रतादिषु । इत्यादि बहुवचन विरोधः स्यात् उपवासे शुक्लाष्टम्या नवमीविद्धायाः सर्वैरेव निबंधिभिरभ्युपगमात । अत एव सोपवासो निशार्द्धे तु इति श्रुतेः यदाष्टम्युपवासविधिस्तदा पूजा प्रप्यते उपवासस्तु नवमीयुक्तायामेवेति न काप्यनुपपत्तिः ॥ **निर्णयामृतेतु** ॥ महाष्टम्याश्विने मासि इति मूलयोग वैशिष्ट्य विधिरयं भूतभव्यसमुच्चारणे भूतं भव्यायोपदिशातेइति न्यायेन सप्तमीविद्धाविधेर्मूलयोगवैशिष्ट्यं परत्वं प्रतीयते न सप्तमीविद्धाविधानार्थत्वमिति । किंच सप्तमीविद्धाविधायकवाक्यानि विश्वरूपनिबंधे

लिखितान्यपिचिरंतनानन्तभट्टीयभोजराजीयादिनिबन्धेष्वदर्शनात्संदिग्धमूलकान्यपीतिज्ञायते। एवंमैथिलोपिजगद्गुरुसंज्ञकोनिशीथपूजासप्तमीविद्धाप्रामाएयंवदन्जगल्लघुरेवगएयते पुत्रवतस्तु महाष्टम्यामुपवासोनिषिद्धः॥ कालिकापुराणे॥ उपवासंमहाष्टम्यांपुत्रवान्नसमाचरेत्। यथातथैवपुत्रार्थीव्रतीदेवींप्रपूजयेदिति। एतच्चकेवलाष्टमीपरम। नवरात्रोपवासस्यविहितत्वादितिध्येयम॥॥

॥ इतिदुर्गाष्टमीनिर्णयः॥ अथदुर्गानवमीव्यवधानभियाऽत्रैवनिर्णीयते। साचदुर्गापूजादौपूर्वविद्धाग्राह्याअपराणिदुर्गानवमीत्युक्तेः॥ भविष्योत्तरे॥ आश्वयुक्शुक्लपक्षेतुअष्टमीमूलसंयुतासामहानवमीनामत्रैलोक्येपिसुदुर्लभा॥ कन्यांगतेसवितरिशुक्लपक्षेऽष्टमीयुता। मूलनक्षत्रसंयुक्तासामहानवमीस्मृता मूलग्रहणंमूलाद्यृक्षत्रयोपलक्षणाम॥ तदुक्तंलैङ्गे॥ दुर्गापूजासुनवमीमूलाद्यृक्षत्रयान्विता महतीकीर्त्तितातस्यां दुर्गांमहिषमर्दिनीम। चण्डिकामुपहारैस्तुपूजयेद्राज्यवृद्धये। वलिदानेतूत्तरविद्धाग्राह्या। सूर्योदयेपरंरिक्तेत्युक्तेः॥ वलिदानेकृतेष्टम्यांपुत्रभंगोभवेदिति॥ यत्तुनकार्यादशमीविद्धानवमीतुसदाबुधैः नवमीदशमीविद्धांयेकुर्वन्तिविमोहिताः। वृथातेषांभवेत्सर्ववलिपूजाविधानकमितिवचनम। तच्छुद्धायांनवम्यांवलिदानंकर्त्तव्यमित्येवंपरम। अन्यथासूर्योदयंपरंरिक्तेतिवाक्यविरोधःस्यादिति॥ विश्वरूपनिबंधे॥ आश्विनस्यसितेपक्षे आरब्धेनवरात्रके। शवसूतेसमुत्पन्नेक्रियाःकार्याःकथंबुधैरिति॥ प्रश्ने॥ सूतकंवर्त्तमानेचतत्रोत्पन्नंयदाभवेत॥ देवीपूजाकर्त्तव्यापशुयज्ञविधानतः वर्त्तमानेप्रारब्धेनवरात्रकेसूतकंयदोत्पन्नंभवेत्तदास्वयमेवदेवीपूजाकर्त्तव्या अप्रारब्धेपशु

विधानतः अन्त्ये नारिन होत्रादिवत् कारयितव्यमित्यर्थः ॥ अथ नवरात्रकृत्यम् भविष्योत्तरे ॥ आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम् । प्रतिपदादि क्रमेणैव यावच्च नवमी भवेत् त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम् ॥ तथा सर्वं च विन्ध्यवासिन्यां नवरात्रोपवासिनः । एकभक्तेन नक्तेन तथैवायाचिते न च पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ॥ तथा देवीपुराणे ॥ कन्यासंस्थारवौतत्र शुक्लामारभ्य नन्दिकाम् । अयाची वाथ वैकाशी नक्ताशी वाथ वारयतः नन्दिकां प्रतिपदम् ॥ मार्कण्डेये ॥ निराहारो यताहारो ॥ भविष्योत्तरे ॥ आश्वयुक् शुक्ल प्रतिपत्स्वातियोगे शुभे दिने । पूर्वं मुच्चैः श्रवानाम प्रथमं यमावहेत् । तस्मात्सर्वैर्नरैस्तत्र पूज्यो सौश्रद्धया सह ॥ पूजनीयाश्चतुरगा नवमीयावदेवहि । अजस्य दशवर्षाणि रुधिरेण प्रतर्पिता माहिषेण शतवीरतृप्ता भवति च चण्डिका । सहस्रं तृप्तिमायाति स्वदेह रुधिरेण च शान्ति स्वस्त्ययनं कार्यं तदा तेषां दिने दिने । धान्यं भल्लातकं कुष्ठं वचाः सिद्धार्थकास्तथा पंचवर्णेन सूत्रेण ग्रंथिं त्वेषां तु वंधयेत् । महानवमी सुपक्वस्य । तस्याङ्गेषु पयुज्यंते प्राणिनो महिषादयः सर्वे ते स्वर्गतिं यांति घ्नतां पापं न विद्यते यावन्न चालयेच्छस्त्रं पशुस्तावन्न हन्यते न तथा वलिदानेन पुष्प धूप विलेपनैः । यथा संतुष्यते मेषैः र्महिषै विन्ध्यवासिनी । भवानी प्राणिणो प्राणा येषां याता युधिष्ठिर तेषां स्वर्गे ध्रुवं वासो वीरास्ते प्सर सां गणाः ॥ अथ कालिकापुराणोक्तो वलिदानविधिः ॥ स्थापयित्वा वलिं तत्र पुष्प चन्दन वन्दनैः पूजयेत्साधको देवीं वलि मंत्रैः पृथक् पृथक् उत्तराभि मुखो भूत्वा वलिं पूर्वमुखं स्थितम् । निरीक्ष्य साधकः पश्चादिमं मंत्र मुदीरयेत् । वरस्त्वं वलिरू-

पिणा मम भाग्यादुपस्थितः प्रणमामि ततः सर्वरूपिणं वलिरूपिणं च-
ण्डिका प्रीतिदाने नदातुरा यद्विनाशने वैष्णवी वलि रूपाय वले तुभ्यं
नमोनमः यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयंभुवा। अतस्त्वां घातया
म्यद्य तस्माद्यज्ञे वधोऽवधः त्रूं ह्रीं श्रीं मिति मंत्रेण वलिं वासन रूपिण
म्। चिन्तयित्वा न्यसेत्पुष्पं मूर्द्धि तस्य च भारत। ततो देवीं समुद्दिश्य काम
मुद्दिश्य चात्मनः। अभिषिच्य वलिं पश्चात्कर वालं प्रपूजयेत्। रसा
नात्वं चण्डिकायाः सुरलोक प्रसाधकः ह्रीं खड्गायनम इति नत्वा खड्गं
प्रपूजयेत्। कृष्णं पिनाक पाणिं च कालरात्रि स्वरूपिणम्। उग्रं रक्ता
स्यनयनं रक्त माल्यानुलेपनम्। रक्ताम्बर धरं चैकपाशहस्तं कुटुम्बि
नम्। पिवन्तं रुधिरं चापि भुञ्जानं क्रव्यसंहतिम्। असिर्विशसनः खड्ग
स्तीक्ष्णधारो दुरासदः। श्री गर्भो विजयश्चैव धर्म धारो सितनमः। पूज
यित्वा ततः खड्गं ओं हूँ फडिति मंत्रकैः गृहीत्वा विमलं खड्गं छेदयेद्वलि
मुत्तमम्। ततो वलीनां रुधि रं तोय सैन्धवैः सत्फलैः मधुभिर्गन्धपुष्पै
स्तु दधि वास्य प्रयत्नतः॥ ॐ त्रूं ह्रीं श्रीं कौशिकी तिरुधिरा प्यायिता
भव स्थाने नियोजयेद्वृत्तं शिरसश्च प्रदीपकम्। एवं दत्वा वलिं पूर्णं फ
लमाप्नोति साधकः हीना तस्माद्धीन फलं विफलं स्याद्विपर्जयात्। व
लिदाने तु दुर्गायाः अन्यत्रापि विधिस्तदा। अयमेव प्रयोक्तव्यः स्तुम्भि
वैताल भैरवः॥ तथा वैष्णवी मंत्र कल्पोक्तः क्रमः सर्वत्र सर्वदा साधकै र्वलि
दानस्य ग्राह्यः सर्वेश्वरस्य च वलिभिः साध्यते मुक्ति र्वलि भिर्मोक्षश्च साध्य
ते वलिदानेन सततं। जयेच्छत्रून्नृपात्मजः मत्स्यानां कच्छपानां तु रुधि-
रैः सततं शिवा मासैकं तृप्ति माप्नोति ग्राहे र्मासत्रयन्तथा मृगानां शो-
णिते र्देवी खगानामपि वि स्तृतैः अष्टौ मासान वाप्नोति तृप्तिं कल्या
णदा सदा। गोगोधिकानां रुधिरै र्वार्षिकीं तृप्ति माप्नुयात्। कृष्णसा

रस्य रुधिरैः शूकरस्य च शोणितैः आप्नोति सततं देवी तृप्तिं द्वादशवार्षि
कीम्। अजाविकानां रुधिरैः पंचविंशतिवार्षिकीम्। महिषाणां च खड्गानां रुधिरैः शतवार्षिकीम्। तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा
। सिंहस्य सरभस्याथ स्वगात्रस्य च शोणितैः देवी तृप्तिमवाप्नोति सह
स्रं परिवत्सरान्। मांसैरपि तथा तृप्तिं रुधिरैर्यस्य यावती। कृष्णसारस्य
ते खड्गं तथा मत्स्यं च रोहितम्। वार्ध्रीनसंयुगं चापि फलं तेषां पृथक्पृ
थक्। कृष्णसारस्य मांसेन तथा खड्गस्य चण्डिका। वर्षपंचशतं देवी
तृप्तिमाप्नोति केवलाम्। रोहितस्य तु मत्स्यस्य मांसैर्वार्ध्रीनसस्य च।
तृप्तिमाप्नोति वर्षाणां शतानि त्रीणि मत्प्रिया। त्रिपिबन्त्विन्द्रियं क्षी
णं श्वेतं वृद्धमजापतिम्। बुधाः वार्ध्रीनसं प्राहुर्हव्ये कव्ये च संस्कृत
म्। नीलग्रीवो रक्तशीर्षः कृष्णपादः सितच्छदः वार्ध्रीनसः स्यात्प
क्षी च ससे विष्णोरपि प्रियः नरेण बलिना देवी सहस्रं परिवत्सरान्। विधि
दत्तेन चाप्नोति तृप्तिं लक्षं त्रिभिर्नरैः। नारेणैवाथ मांसेन त्रिसहस्राणि
वत्सरान्। तृप्तिमाप्नोति कामाख्या भैरवो मम रूपधृक्। मंत्रपूतं शो
णितं तत्पीयूषं जायते सदा। समस्तकं चापि तस्य मांसं चापि शिवा
तथा। तस्मात्तु पूजने देव्या बलिः शीर्षं च लोहितम्। भोज्ये होमे च मां
सानि नियुंजीत विचक्षणाः पूजासु नाममांसानि दद्याद्वै साधकः क्व
चित् दत्ते च लोहितं शीर्षममृतत्वं च जायते। कुष्माण्डमिक्षुदंडं च मद्य
मासवमेव च एते बलिसमाः प्रोक्ताः तृप्तौ छागसमास्तथा। चन्द्रहासे
न कर्त्र्या वा छेदनं मुख्यमिष्यते। दात्रा सिन्धेन्वसु कंठसकुलादि तु म
ध्यमम्। क्षुर क्षुरप्रभल्लैर्वाचा धमं परिकीर्त्तितम्। रन्योन्यैश्च शक्तिभि
र्वाणैः खड्गै खरैः कथंचन। नास्ति देवी बलिं तं तु दाता मृत्युमवाप्नुयात्
हस्तेन घातयेद्यस्तु प्रोक्षितं साधकः पशुम्। पक्षिणां वा ब्रह्महत्याम-

वाप्नोति सुदुस्सहाम। नामंत्र्यखड्गं तु वलिं नियुंजीयाद्विचक्षणः खड्ग
स्य मंत्रणो मंत्राः पूर्वमेव प्रदर्शिताः। अथ दैवतमुद्दिश्य काममुद्दिश्य
चात्मनः छेदयेत्तेन खड्गेन वलिं पूर्वाननं ततः। अथ चोत्तर वक्त्रं तु व
लिं पूर्वं सुखः स्वयम पूर्वोक्त सलिलादींस्तु रक्ते चास्य नियोजयेत्सौ
वर्णं राजतं ताम्रं रौप्यं पर्णपुटं तथा माहेयं कांस्यमथवा यज्ञकाष्ठम-
यन्तथा पात्रं तु रुधिरादाने कर्त्तव्यं विभवावधि। न लौहे वाल्कले
वापि रैत्ये रङ्गेऽघ कौषिके। दद्याद्रक्तं वलीनां तु भूमौ प्रतिस्रवेत तथा। द-
द्यान्नरपतिस्तत्र पुटकादौ कथंचन हयमेध मृते दद्यान्न कदाचि
द्धयं वलिम्। तथादिमालमेधे तु गजं दद्यान्नराधिपः न कदाचित्तथा।
देव्यै प्रदद्याद्धय हस्तिनौ हयकर्णं चामरं तु वलिं दद्यान्नराधिपः सिंहं
व्याघ्रं नरं वापि स्वगात्ररुधिरं तथा न दद्याद्ब्राह्मणो मद्यं तथा देव्यै कदा-
चन सिंहं व्याघ्रं नरं दद्याद्ब्राह्मणो नरकं व्रजेत। इहापि स्यान्महीना-
य सुखभोगविवर्जितः स्वगात्र रुधिरं दत्वा चात्मवध्यामवाप्नुयात्
मद्यं दत्वा ब्राह्मणस्तु ब्राह्मणाया देव हीयते प्रदद्युः कूष्माण्डं तु न वलिं
क्षत्रियादयः ददंतः कूष्माण्डं तु ब्रह्मवध्यामवाप्नुयुः यत्र सिंहस्य व्या
घ्रस्य नरस्य विहितो वधः क्षत्रियादौ तथा वर्णे तत्रायं प्रोच्यते वि-
धिः कृत्वा घृतमयं व्याघ्रं नरं सिंहं च भैरवम्। अथवा सूपविहितं यव-
क्षोदमयं तथा घातयेत्तं महास्त्रेण स्वेन मन्त्रेण संस्कृतम्। प्रभूत वलि
दाने तु वीरैंस्त्रीँस्तत्र दागतः कृतान्नपूजयेत्प्रमुखान्कृत्वा सर्वान्मन्त्रेण
साधकः सामान्य पूजा कथिता वलीनां पूर्वतो मया। विशेषो यत्र य
त्रास्ति तत्पुनः शृणु भैरव महिषं योददेद्देव्यै भैरव्यै भैरवाय वा। अनेनै
व तु मंत्रेण तद्दातं पूजयेद्वलिसहृतवान्॥

छेदसि यथा वहसि चण्डिकाम्। तथा वहस्व पुष्टिं मे शुभं च वह माम

कम् यमस्य वाहनंत्वं तुवर रूप धराव्यय। आयुर्दत्तं यशोदेहि कासरा
य नमोस्तुते। देव्यैपि त्वेच सुभग खड्गत्वंखड्ग सन्निमः जहि विघ्नान्महा
भाग गुहा जात नमोस्तुते कृष्णा सार ब्रह्म मूर्त्ते ब्रह्म तेजो विवर्द्धन। चतुर्वे
द मयो सित्वं प्रजां देहि यशोमहत्। त्वमष्ट पादान् विश्वतु चन्द्र भागस
मुद्भव। अष्ट मूर्त्तें महा बाहो भैरवा यन मोस्तुते। यथा भैरव रूपेणावार
हेनि हतः स्त्वया। यथा शरभ रूपेणात्वं वावहासि चरिडकाम्। तथा शुभा
निमे नित्यं वह विघ्नांश्च सूदय॥ त्वं हरिः सिंह रूपेण जगत्प्रत्यक्ष रूप
धृक्। जघा नयेन रूपेण हिरण्यकशिपुं पुरा। नरस्य गात्ररुधिरैः सपर्यां
शृणु भैरव पीठे यद्दीयते नित्यं वलिं दद्यात श्मशान के श्मशानं हे
तु कारव्यं च तत्पूर्वं मया ति पादितम्। मम रूपं श्मशानं तु भैरवाख्यं च क
थ्यते। तत्राङ्गत्वं ततः सिद्धौ त्रिभागं तु भविष्यति पूर्वाङ्ग भैर वाख्यं तु
समुत्सृष्टं नरस्य च दक्षिणांशे शिरो दद्या भ्दैरव्या मुण्ड मालया। रुधिरं
पश्चिमांगे तु हेतु काख्ये नि योजयेत्। दत्वा संपूज्य च वली न्विसृज्य ग
मन क्रमे पीठं श्मसाने षु वलिं लिखेत्तु वलि दीपकम्। तथाप्यन्यत्र चोत्सृ
ज्य छिद्रान्यत्र शिरोमृतम् निवेदये त्साधकस्तु वि पूज्याथ विलोक्य च
। कराठा घोना भितश्चोर्द्धं स्वाङ्ग पाणि मृते तथा प्रदद्या द्रुधिरं घातंन्
ति कुर्याच्च साधकः। गराड योश्च ललाटस्य भ्रुवो र्मध्यस्य शोणितम्। कर्णा
ग्रस्य च वाह्वोश्च स्तनयो रुधिर स्य च कराठा घोना भितश्चोर्द्धं हृन्दागस्य
यतस्ततः पार्श्व योश्चापि रुधिरं दुर्गायै विनिवेदयेत तदंगकृत घाताच्च
न क्रुद्धो क्षुब्धमानसः क्षतरक्तं प्रदद्या त्तु पद्म पत्रस्य मस्तके सौवर्णे राजते
ताम्रे कांस्य पात्रे तु वानरः विधाय देव्या दद्यात्तु तद्रक्तं मंत्र पूर्वकमक्षरो
न क्षुरिका खड्ग संकुलादि प्रदस्त्रकम् घाते नदृह दस्त्रस्य महत्फल भवा-

प्नुयात्। पद्मपुष्पस्य पत्रं तु यावद्देहजं शोणितम् तत्प्रमाणं चतुर्भा
गा अधिरक्तं तु साधकः न कदाचित्प्रदद्यात्तु नाङ्गच्छेदं समाचरेत्। यः
स्वहृदय संघात मांसं माषप्रमाणतः तिलमुद्गप्रमाणं वा देव्यै दद्यात्तु भ
क्तितः परमासा स्यन्तरे सोत्र काम मिष्टमवाप्नुयात्। बाह्वोर्वा कर्णयो-
र्वापि यो दद्याद्धी पवर्त्तिकाम हृदय बाह्व हृपात्रं विना भक्त्यात्तु साध
कः स्वरा मात्रेण तद्दीप प्रदानस्य फलं शृणु भुक्त्वाथ विपुलान्भोगान्दि-
वी गेहे यथेक्कुपा कल्पत्रयं तत्र स्थित्वा सार्व भौमो भवेन्नृपः महिषस्य शि
शिर श्छिन्नं स प्रदीपं शिवा पुरः हस्ताभ्यांयः समाधाय अहोरात्रं तु तिष्ठ
ति। स चिरायुः पूत मूर्त्ति रिह भुक्त्वा मनोरथान् भोगानन्ते मगृहगो ग-
णा नाम धियो भवेत्। नरस्य शीर्ष मादाय साधको दक्षिणे करे। वामे तु रुधि
रं पात्र गृहीत्वा निशि जागृतम्। याव द्रात्रि स्थितो मर्त्यो राजा भवति चेहवे
मृतो मम पुरं प्राप्य गणानाम धियो भवेत्। महा माये जगन्नाथे सर्व
काम प्रदायिनि ददामि देह रुधिरं प्रसीद वरदा भव इत्युक्त्वा नति पूर्वेण मू
ल मंत्रेण साधकः स्वगात्र रुधिरं दत्वा मानवः सिद्धि माप्नुयात्। सौभाग्येन
परयच्च प्रदीपं परमं रुचिः दीप यन्मां सदेहस्थं दीपं ह्रां ह्रौं नमोनमः इत्य-
नेन तु मंत्रेण दीपं दद्या द्विचक्षणः महानवम्यां शरदि शुक्लपक्षे वलिं हरेत्।
चैत्रमासि शिते पक्षे चतुर्दश्यां विशेषतः वलिभिर्म हिषैश्छागै र्मीचमैरव-
रूपिणाम्। तोषयेन्मधु भिर्मत्स्यैस्तेन तुष्याम्यहं सुतौ। पशूनां पक्षिणां वा-
पि नराणां तु विशेषतः स्त्रियं न दद्यात्तु वलिं दत्वा नरक माप्नुयात् संघात वलि
दाने तु पोषितं पशु पक्षिणोः वलिं दद्यान्मानुषं तु भत्तासं घात पूजितम्।
न त्रिमासीयकान्यूनं पशुं दद्या च्छिरोवलिम्। नच त्रै पाक्षिकान्यूनं प्रदद्या
द्वै पत त्रिणाम्। काणा खञ्जत्व व्यङ्गादि दुष्टं न पशु पक्षिणाम्। अति वृद्धं
रोगिणां च क्लीवं हीना धिकाङ्गकम्। छिन्न लाङ्गल कर्णादि भग्न दंत तथै-

वच। भग्न शृङ्गादिकं चापि नद्द्यात्तु कथंचन। न ब्राह्मणं वलिं दद्याच्छा-गदानमपि पार्थिवम्। नोत्सृष्टं द्विज देवेभ्यो भूपतेस्तनयं तथा। वल्ले न वीजितं दद्यात्तनयं विप्र भूभृतोः नारं सव्यं शिरो रक्तं देव्याः सम्यग्निवेदयेत्। छागस्यं वाम तो दद्याद् गृतो देह शोणितम्। कव्यानांच पशूनां च पक्षिणां च शिरोमृतम्। वामे निवेदयेत्पार्श्वे जलजानांच सर्वतः। कृष्णा सारस्य खड्गस्य कूर्मस्य मकरस्य च। ग्राहाणा मथ मत्स्याना मग्र स्थानिवेदयेत्। सिंहस्य दक्षिणे दद्यात्सौङ्गिनो वापि दक्षिणे। पृष्ठ देशेन दद्यात्तु शिरोवा रुधिरं वलिम्। नैवेद्यं दक्षिणे वामे पुरतो न च पृष्ठतः वामतस्तु तथा धूप मग्रे वाणान्तु दक्षिणे। निवेदयेत् पुरोभागे पुष्प धूपं च दक्षिणम्। मण्डले चेन्मध्य भागे वाम दक्षिण पूर्ववत्। मदिरां पृष्ठतो दद्यादन्य पानं तु मध्यतः छिन्नं शिरस्तथैशान्यां नारं दिश्यथ राक्षसे पतितं राज्य हानिं च बिनाशंच विनिर्द्दिशेत्। पूर्वाग्नि याम्य वारुणाय वायव्यादिगतं क्रमात्। श्रियं पुष्टिं भयं नाशं पुत्रलाभं धनं तथा। क्रमाद्विनिर्दिशे न्नारं छिन्नं शीर्षं तु भैरव उत्तरादिक क्रमादेव महिषस्यापि मस्तकम् पतितं वायुवा काष्ठं यथ्य दद्याच्छ्रणुष्वतत। भाग्यं हानिं तथैश्वर्य्यं बित्तरिपुजयं भयम्। राज्य लाभं श्रियं चापि क्रमात्त द्विद्धि भैरव पशूनां चैव सर्वेषां छागादीनां विशेषतः सर्वं फलं क्रमाद्विद्यादृतेच जलजाण्डजो जलजानां पक्षिणां तु याम्य नैर्ऋतयो र्भयम्। अन्यत्र तु श्रियं दद्यात्पतितं शातितं शिरः। यस्या त्कटकटा शब्दो दंतानां छिन्नमस्तके। नाराणां पशु पक्ष्यादि ग्रहादीनां च शोकदम्। लोतकं चक्षुषो जातं यदि श्रवति मस्तके। छिन्ने नरस्य राज्यस्य तदा हानिं विनिर्द्दिशेत्। माहिषे मस्तके नेत्राद्यदि श्रवति लोतकम्। छिन्ने निवेदिते चैव श्रप मृत्युं विनिर्द्दिशेत्। अन्येषामपि पश्वादिवलीनां शिरसो दिसात्। निर्गतं

त्नोतकं धत्ते परांभीतिंगदं तथा। हसति छिन्न शीर्षश्चेन्नारंस्याच्चरि
पुक्षयः श्री वृद्धि रापुषो वृद्धिस्तदादातुर्न संशयः यध्यद्वाक्यं निगदति तथा
भवति चाचिरात् हुंकाराद्राज्य हानिस्तु जायते छिन्न मस्तके। वि-
भूति मतुलां दध्या त्वरामासाभ्यन्तरे पिवा। रुधिरा दानकाले तु शङ्कु
सूत्रं यदि श्रवेत कार्यार्द्धं याति चोर्द्धं चेद्दातुस्स्यान्मरणं तदा। आक्षेपाद्वा
म पादस्य महावेगः प्रजायते अन्यत्राक्षेपकरणे कल्याणमुपजायते म
हिषः पंच वर्षीयः पंच विंशति वार्षिकः वलिर्हयो नरो देव्यैतस्य दानं तु
भूतये महानवम्यां शरदि यथ्ये वंदीयते वलिः तदा तदाष्टाङ्ग भवे मासे हो
मं समाचरेत्। दुर्गातंत्रेण मंत्रेण प्रणीते दहने शुचौ। एवं दत्वा वलिंम
त्यो रिपुक्षयमवाप्नुयात्॥ **इति श्री कालिका पुराणोक्तो व**
**लिदान विधि संक्षेपः॥** अथ शिष्टाचारा च्छिन्ना वैधृति रहिता-
यां प्रति पदि कलश स्थापनम्। दुष्टायां प्रति पदि अशौचादि दोषेवास्त-
म्यादि त्रिरात्र पक्षः त्रिरात्रंवापि कर्त्तव्य मिति वचनात्। केवलाष्टमी प-
क्षो वा कार्य्य स्तृतीयश्चतुर्थ पक्षाभावादिति ध्येयम्॥ कलश प्रमाण-
म्॥ **देवीपुराणे॥** पञ्चाशाङ्गुल वैपुल्यमुत्सेधः षोडशाङ्गुलः कल
शानां प्रमाणं तु मुखमष्टाङ्गुलं भवेत् मुक्ता फलं हीर कंच वैदूर्यं पद्मरा
गकम्। पुष्प रागं च गोमेदं नीलं गारुत्मतं तथा। प्रवालमुक्तान्युक्ता-
नि महा रत्नानि वै नव सुवर्णं रजतं मुक्ता राजावर्त्तं प्रवालकम्। रत्न पंचक
माख्यातं शेषम्वस्तु ब्रवीम्यहम्। अभावे सर्व रत्नानां हेम सर्वत्र कल्पये-
त्। तथा पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्म
णैः क्षत्रियैर्नृपैः वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः स्त्रीभिश्च
कुरुशार्दूल तद्विधान मिदं शृणु जयाभिलाषी नृपतिः प्रतिपत्प्रभृति
क्रमात्। लोहाभिसारिकं कर्म कारयेद्यावदष्टमीम्। लौहो नामाभव-

सूर्ववन्नानकुमहावलः सदेवैः समरे क्रुद्धै र्वहुधा शकलीकृतः तदंगसंभवं सर्वं लोहंयद्दृश्यते क्षितौ। शस्त्रास्त्रमंत्रै र्होतव्यं पायसं घृतसंयुतम्। हुतशेषन्तुरंगानांराजान्नमुपहारयेत् लोहाभिसारिकंकर्म तेनैतदृषिभिः स्मृतम् प्रागुदक्प्रवनेदेशे पताकाभिरलंकृतम् मराडपंकारयेद्दिव्यं नवसप्तकरंवरम् षोडशहस्तप्रमाणमित्यर्थः आग्नेयंकारयेत्कुराडंहस्तमात्रंतुशोभनम् मेखलात्रयसंयुक्तं योद्धाश्वत्थदलाभया। राजचिन्हानि सर्वाणि शस्त्राणयस्त्राणियानि च। आनीय मंडपेतानिशस्त्राणयस्त्राणिवासयेत्। ततःपुरोहितः स्नातः शुक्लाम्वरधरः शुचिः ॐकार पूर्वकैर्मंत्रैस्तल्लिंगैर्जुहुयाद्धुतम्। भविष्योत्तरे। दुर्गागृहं प्रकर्त्तव्यं चतुरस्रं सुशोभनम्। रहस्यस्वस्तिकाद्यैश्चच चित्रितंवस्त्रमंडितम्। गौरमृगद्रोमयाभ्यां चलिप्तं शस्त्रसमन्वितम्। तन्मध्येवेदिकाकार्य्या चतुर्हस्ता समाशुभा। तस्यांसिंहासनंक्षौमकम्वलाजिनसंयुतम्। तत्रदुर्गांस्प्रतिष्ठाप्य सर्वलक्षणसंयुताम्। सर्वदेवमयींप्रौढयौवनोन्मादशालिनीम्। भुजैश्चतुर्भी रुचिरै र्दशभि र्वा विभूषिताम्। तप्तहाटकवर्णाङ्गीं त्रिनेत्रां शशिशेखराम्। पीतवस्त्रपरीधानां नीलकौशेयसंयुताम्। ग्रैवेयहारकेयूरनूपुराभरणान्विताम्। नानारत्नविचित्रेण मुकुटेनविराजितम्। अनेककुशुमाकीर्णकपर्द्देन सुशोभिताम्। नितम्वविम्वसंवद्ध किङ्किणी क्वणनादिताम्। शूलचक्रदराडशक्तिभल्लचापासिधारिणीम्। घराटाक्षमालाकरकपान पात्रलसत्कराम्। तदग्रेछिन्नशिरसंमहिषं रुधिरप्लुतम्। निःसृतार्द्धंततुकंठनाला च्चर्मासिधारिणाम्। देवीकरधृतग्रीवं शूलेनोरसिताडितम्। दैत्यंकरालदंष्ट्रास्यं विद्युत्कपिशमूर्द्धजम्। नागपाशेन विक्षिसंहर्य्यक्षेणापि विद्रुतम्। वसद्रुधिरवक्त्रेण धुन्वतोर्द्धंसटं रुषा। उर्द्धलाङ्गूलदराडेनदेव्यधिष्ठानशोभिना। शोभितामातृचक्रेण सेव्यमानां सुरैस्तथा। पूजयेत्प्रयतोदेवीन्नरो नियममास्थितः नियमाः प्रागुक्ताः एकभक्ता

दयः। दुर्गोत्सवे भूमौ शायीत तया मंत्र्य कुमारी भोजयेन्मुदा वस्त्रालंकार दानैश्च संतोष्य प्रति वासरान्। बलिं च प्रत्यहं दद्याद् ओदनं मांसमाषवत्। त्रिकालं पूजयेद् देवीं जपस्तोत्र परायणः। जपो देव्यादिमंत्रस्य स्तोत्रं सप्तशतिकादि ॥ स्कान्दे ॥ एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च। द्विगुणां द्विगुणां चापि प्रत्येकं नवकं च वा। नवभिर्लभते भूमिमैश्वर्य्यं द्विगुणो नच। एकवृद्ध्या भवेत्क्षेममेकैकेन श्रियं लभेत् ॥ १॥ एकवर्षा तु या कन्या पूजार्थं तां विवर्ज्जयेत्। गन्धपुष्प फलादीनां प्रीतिस्तस्या न विद्यते कुमारिका द्विवर्षा च त्रिवर्षा च त्रिमूर्त्तिनी। चतुर्वर्षा च कल्याणी पंचवर्षा च रोहिणी षड्वर्षा भवेत्काली सप्तवर्षा च चण्डिका। अष्टवर्षा शांभवी च दुर्गा च नवभिः स्मृता दशवर्षा सुभद्रेति नामभिः परिकीर्त्तिताः। अत ऊर्द्ध्वं तु या कन्या सर्वकार्येषु वर्जिता फलम् ।दुःख दारिद्र्य नाशाय शत्रूणां नाशनाय च। आयुष्य बलवृद्ध्यर्थं कुमारीं पूजयेन्नृप। आयुः काम स्त्रिमूर्त्तिं च त्रिवर्गस्य फलाप्तये। अपमृत्यु व्याधि पीडा दुःख पापापनुत्तये। सौख्य धान्य धनारोग्य पुत्र पौत्रादि वृद्धये कल्याणीं पूजयेद्धीमान्नित्यं कल्याणवृद्धये आरोग्य सुखकामी च जयकामी तथैव च ३ यशः कामी नरो नित्यं रोहिणीं पूजयेत्तथा। विद्यार्थी च राज्यार्थी च विशेषतः ॥ ४॥ शत्रूणां च विनाशार्थी कालिकां पूजयेन्नरः ऐश्वर्य्य सुखकामी च स्वर्गकामी च यो नरः ॥ ५॥ संग्रामे जयकामी च चण्डिकां परि पूजयेत् दुःख दारिद्र्य नाशाय नृपसंमोहनाय च ॥ ६॥ महापाप प्रणाशाय शांभवीं परि पूजयेत् सर्वलोकट शत्रूणामग्र साधन कर्मणि ॥ ७॥ दुर्गां दुर्ग विनाशाय पूजयेद्यत्नतो बुधः सौभाग्य धन धान्यादि वांछितार्थ फलाप्तये ॥ ८॥ सुभद्रां पूजयेन्मर्त्यो दासीदास विवृद्धये प्रातःकाले विशेषेण कृतास्य गोविशेषतः ॥ ९॥ आवाहयेत्ततः कन्यां मंत्रेणानेन भार्गव मंत्राक्षर मयीं लक्ष्मीं मातृणां रूप धारिणीम्। नव दुर्गात्मिकां साक्षात्कन्या मावाहयाम्यहम्। ततः संपूजये

ह्रीमान्मंत्रैरेतैः पृथक् पृथक् जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि =
पूजां गृहाण कौमारि जगन्मातर्नमोस्तुते ॥ १ ॥ त्रिपुरां त्रिपुराधारां त्रिवर्गज्ञा
रूपिणीम् त्रैलोक्यवंदितां देवीं त्रिमूर्त्तिं पूजयाम्यहम् ॥ २ ॥ कालात्मिकां
कलातीतां कारुण्यहृदयां शिवाम् कल्याणजननीं नित्यं कल्याणीं पूज
याम्यहम् ॥ ३ ॥ अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् अनन्तशक्ति
कां लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥ ४ ॥ कामचारां शुभां कांतां कालचक्र-
स्वरूपिणीम् कामदां करुणोदारां कालीं संपूजयाम्यहम् ॥ ५ ॥ चण्डवी-
रां चण्डमायां चण्डमुण्डप्रभंजिनीम् पूजयामि सदा देवीं चण्डिकां चण्ड
विक्रमाम् ॥ ६ ॥ सदानन्दकरीं शांतां सर्वदेवनमस्कृताम् सर्वभूतात्मिकां ल-
क्ष्मीं शांभवी पूजायाम्यहम् ॥ ७ ॥ दुर्गमे दुस्तरे कार्य्ये भवदुःखविनाशनीम्
। पूजयामि सदा भक्त्या दुर्गां दुर्गविनाशिनीम् ॥ ८ ॥ सुन्दरां स्वर्णवर्णाभां सु
खसौभाग्यदायिनीम् । सुभद्रजननी देवीं सुभद्रां पूजयाम्यहम् ॥ ९ ॥ एवम-
भ्यर्चनं कुर्यात् ।कुमारीणां प्रयत्नतः कंचुकैश्चैव वस्त्रैश्च गंधपुष्पाक्षता
दिभिः नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः ॥ अथापूज्या आह हीं
नाधिकाङ्गीं कुष्ठां च विशालकुलसंभवाम् । ग्रन्थिस्फुरितशीर्णाङ्गीं रक्तपू
यव्रणांकिताम् जात्यंधां केकराकाणीं कुरूपान्तनुरोमशाम् संत्यजेद्रोगिणीं
कन्यां दासीगर्भसमुद्भवाम् ॥ अथ पूज्या आह अरोगिणीं सकुष्ठांगीं स
रूपां व्रणवर्जिताम् एकवंशसमुद्भूतां कन्यां सम्यक् प्रजापते । ब्राह्मणीं स
र्वकार्य्येषु जयार्थे नृपवंशजाम् । लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम्
दारुणे चान्त्यजातीयां पूजयेद्विधिनानरः । नवरात्रस्य त्रिरात्रस्य वाकरणा
सामर्थ्ये महाष्टम्यामेव कुर्यात् । तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनीत्यु
दाहृतवचनात् प्रत्यहं होमः कार्य्यः ॥ तदुक्तम् ॥ वायव्यैर्वारुणैः शौरैः शा-
क्रैर्मंत्रैश्च वैष्णवैः वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने । तुरंगरक्षणीया-

स्तु पुरुषैः शस्त्र पाणिभिः नचताड्याः क्वचित्तत्रनचवाह्याः कथंचन तत्र नवरात्रे दुर्बलानिहि रक्षांसि प्रत्यूषे ब्रह्म तेजसा भवंति कस्मात्प्रत्यूषे स्नापयेत्यायश्च द्वयान्। पुरोहितस्तु द्विकालं तर्पयित्वा द्विजोत्तमान्। पुरायाहं कारयेन्नित्यं स्वस्त्याशीर्मङ्गलैर्युतम्। अत्र प्रसंगात्कुराडमराडयादि विधिर्विस्तर भयादत्तुप्रयुक्त त्वाच्च नेह प्रपंचितः। प्रताप मार्त्तराडेमदीये च नव रात्र कृत्य संज्ञ के ग्रंथेनुसंधेयः धृत पल्ययनान श्वान् गजांश्च समलंकृतान्। भ्रामयेन्नगरे नित्यं नन्दि घोष पुरःसरम् प्रत्यहंनृपतिःस्नात्वा संपूज्य पितृदेवताः पूजयेद्राज्य चिन्हानि फलमाल्य विलेपनैः तस्याभि सारणाद्राज्ञो विजयः समुदाहृतः पूजामंत्रान्प्रवक्ष्यामि पुराणोक्तानहं तवयैः पूजिताः प्रयच्छंति कीर्त्तिमायुर्यशोवलम्। तत्रादौ छत्रमंत्रः पथ स्वुदाश्छादयन्ति शिवामांचवै सुन्धराम् तथा छादय राजानं विजयारोग्यवृद्धये। चामर मंत्रः शशांककर संकाश क्षीर हिंडीरपांडुर प्रोत्सारयाशुदुरितं चामरामर वल्लभ॥ अथाश्वपूजा॥ तत्र प्रथमं रेवंत पूजा नमो देवादिदेवाय तुरंग वल धारिणे। सूर्य पुत्राय देवाय तुरंगानां हिताय च तुरंग परिरक्षत्वं मृगयो परिधावसि सत्वगंस्वाधिपं रक्षशरणं त्वां व्रजाम्यहम्। मंत्रान्तरम्। सूर्य पुत्र महा वाहो छायाहृदय नन्दन शांतिं कुरु तुरङ्गानां रेवंतायनमोनमः। अथोच्चैः श्रवः पूजा। दुग्धांभोनिधि संभूत देवेन्द्र विजयावह उच्चैः श्रवन मस्तुभ्यं वाजि वृन्दं प्रयच्छमे। अथ प्रत्यक्षाश्वमंत्रः गंधर्वकुल जातस्त्वं माभूयाः कुलदूषकः ब्रह्मणः सत्य वाक्येन सोमस्य वरुणस्यच। प्रभावाच्च हुताशस्य वर्द्धयत्वं तुरंगमान्। तेजसा चैव सूर्यस्य मुनीनां तपसा तथा रुद्रस्य ब्रह्म वीर्येण पवनस्य वलेन च। स्मरत्वं राजपुत्रोसि कौस्तुभं चमणिंस्मरयां गतिं ब्रह्महा गच्छे न्मातृहा भातृहा तथा। भूमिहा वनदाही च क्षत्रियश्च पराङ्मुखः सूर्याचन्द्रमसौ वायुर्यावत्यश्यंति दुःकृतम्। व्र

जाश्वतांगतिं क्षिप्रं। तच्च पापं भवेत्तव निःकृन्तो यदि वाच्छिन्नो युद्धेऽध्वनि
तुरङ्गम। रिपून्विजित्य समरे सह भर्त्रा सुखी भव॥ ध्वज मंत्रः॥ शक्र
केतो महावीर्य श्याम वर्णाऽर्चयाम्यहम्। पारिजात नमस्तेस्तु तथान्ना-
रायण। ध्वज। गरुत्मन्मारुतगतिस्त्वयि सन्निहितायतः सारवन्त्या युधा
न्यत्र रक्ष त्वं च रिपून्दह॥ अथ पताका मंत्रः॥ हिरण्यकशिपोर्यु-
द्धे युद्धे देवासुरे तथा कालनेमि वधे यच्च तथा त्रिपुर घातने शोभितासि
तथैवाद्य शोभयास्मांश्च संस्मर। पूतनारेवती नाम्ना कालरात्रिश्च यास्मृ
ताद्हस्वाशु रिपून्सर्वान्पताके त्वं मया र्चिता॥ अथ हस्तिमंत्रः॥ कु-
मुदे रावणः पद्मः पुष्पदन्तोथ वामनः सुप्रतीकोंजनो नीलस्त एष्टौ देव
योनयः तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः मन्दो भद्रो गजश्चै
व राज्ञा संकीर्ण एव च वने वने प्रसूता ये यूथानि सुमहंति च यां तु त्वाम्व
सवो रुद्रा आदित्याश्च मरुद्गणाः भर्त्तारं रक्षनागेन्द्र स्वामी च प्रतिपा-
ल्यताम्। अवाप्नुहि जयं युद्धे गमने स्वस्ति तो व्रज॥ अथ खड्ग मंत्रः॥
असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः श्रीगर्भो विजयश्चैव ध-
र्मा धारस्तथैव च। इत्यष्टौ तव नामानि स्वयमुक्ता निवेधसा। नक्षत्रं कृत्ति
का तेस्तु गुरुर्देवो महेश्वरः हिरण्यं च शरीरं ते धाता देवो जनार्द्दनः पिता
पितामहो देवस्त्वं मां पालय सर्वदा। इयं येन धृता क्षोणी हतश्च महिषासु-
रः तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः॥ अथ चापमंत्रः॥ स-
र्वायुध महाभाग सर्वदेवारिसूदन। चाप मां सर्वदा रक्ष शरैः शायक सत्त-
मः॥ धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च। त्रयीमूर्त्तिगतं देवं धनुरत्र
नमाम्यहम्॥ अथ क्षुरिका मंत्रः॥ सर्वायुधानां प्रथमं निर्मितासि
पिनाकिना। शूलायुधाद्विनिःकृष्य कृत्वा मुष्टिग्रहं शुभम्। चण्डिकायाः प्र
दत्तासि सर्वदुष्टनिवर्हिणी। तथा विस्तारिता चासि देवानां प्रतिपादिता-

सर्वसत्वाङ्गभूतासि सर्वाशुभनिवारिणि। छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोस्तुते॥ अथ कहार मंत्रः॥ रक्षाङ्गानि गजान् रक्ष रक्ष वाजिधनानि च मम देहं सदा रक्ष कहार कनमोस्तुते॥ अथ कुन्तमंत्रः॥ कुन्तायुध महावीर रिपुसैन्य विदारण। गृहाण जीवितं तेषां मम सैन्यं च रक्ष माम्॥ पाशमंत्रः॥ पाश घात यश नूं स्त्व मनपालोक मायया। गृहाण जीवितं तेषां मम सैन्यं च रक्ष माम्॥ अथ चर्म मन्त्रः॥ शर्म प्रदत्वं समरे चर्म त्वं मयो दितेरक्ष मां रक्षणीयोहं तापनीय नमोस्तुते॥ कनक दण्ड मंत्रः॥ प्रोत्सारणाय यश नृणां साधूनां रक्षणाय च ब्रह्मणा निर्मितश्चापि व्यवहार प्रसिद्धये। यशो देहि सुखं देहि जयदो भव भूपतेः। ताडयस्व रिपून्सर्वान्हेम दंड नमोस्तुते॥ अथ दुन्दुभिमंत्रः॥ दुन्दुभेत्वं सपत्नानां घोरो हृदय दारणः भव भूमि पसैन्यानां तथा विजय वर्द्धनः यथा जीमूत घोषेण हृष्यंति च वराङ्गनाः तथास्तु तव शब्देन हर्षो स्माकं सुदावहः॥ शङ्खमंत्रः॥ पुण्यस्त्वं शंख पुण्यानां मंगलानां च मङ्गलम्। विष्णुना विधृतो नित्यमतः शांति प्रदो भव॥ सिंहासनमंत्रः॥ विजयो जयदो जेता रिपुघाती शुभंकरः दुःखहा धर्मदः शांतः सर्वारिष्ट निवर्हणः। ते वैसंनिधौ यस्य नव सिंहा महाबलाः तेन सिंहासने ति त्वं मंत्रे वेदेश्च गीयसे। नमस्ते सर्वतोभद्र भद्रदो भव भूपते। त्रैलोक्य जय सर्वस्व सिंहासन नमोस्तुते। तथैव कर्म चिन्हानि स्वानि पूज्यानि शिल्पिभिः। लोहाभिसारिकं कर्म कृत्वैवं मंत्र पूर्वकम्। अष्टम्यां नियमं कृत्वा पूर्वान्हे स्नानमाचरेत्। कुंकुम चन्दन चन्द्रैश्च चतुःसमैः शैलपिष्टैश्च चर्चित गायत्रीं देवीं कुसुमैरभ्यर्चयेद्दृढुमिः कुसुमैस्स पद्म पुष्पैः स धूप दीपैः स नैवेद्यैः मांसैर्बल्युपहारैर्मङ्गल शब्दैः समूर्छित्तैश्चिन्हैः। सित छत्रैर्यानं स्यन्दनैर्सित शस्त्रधारिलोकैः तुष्टे रवादितु निवेद्य ते सर्वमेव भगवत्यै॥ पूजामंत्रस्तु॥ ज

यंती मंगलाकालीतिप्रसिद्धः॥ **अथ विल्वपत्रमंत्रः॥** अमृतोद्भव श्रीवृक्षमहादेवप्रियःसदा विल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि। दुर्गा सा पूजनीया यत तद्दिने द्रोणपुष्पयोः सा चाभीष्टा सुरेशान्यां तया रुद्रा यतते ग्रतः ततः खड्गं नमस्कृत्य शत्रूणां वधसिद्धये। इच्छेद्वृद्धिं च राज्यं च सुभिक्षं चात्मनो नृपः पुनः पुनः प्रणम्यार्घ्यं संस्मरन् हृदये शिवाम् सर्वं कृत्वेति कौरव्य अष्टम्यां जागरं। निशि नटनर्त्तनगीतैश्च कारयेत्सवमहोत्सवम्। स्वयं हृष्टैर्निशां नीत्वा प्रभाते अरुणोदये घातयेन्महिषान्मेषान् भटतोनतकन्धरान्। शतमर्द्धशतं वापि तदर्द्धं वाय येच्छया सुराशवभृतैः कुंभैस्तर्पयेत्परमेश्वरीम् कापालिकेभ्यस्तद्देयं ज्वलन्द्दिर्हीपवृक्षकैः कश्चिद्यो पोषितो धीरो विधृतोन्येन खड्गवान्। भूतेभ्यस्तु वलिं दद्यान्मंत्रेणानेन सामिषम्। सरक्तं सजलं चान्नं गंधपुष्पाक्षतैर्युतम्। त्रीं स्त्रीन्वारान्समुत्सुने दिग्विदिक्षु किरे द्वलिम्। वलिं गृह्णन्तु मे देवा आदित्या वसवस्तथा। मारुतश्चाश्विनौ रुद्रा सुपर्णाः पन्नगा ग्रहाः असुरा जातुधानाश्च पिशाचोरगराक्षसाः डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः दिक्पाला लोकपालाश्च येच विघ्नविनायकाः जगतां शांतिकर्त्तारो ब्रह्माद्याश्च महर्षयः माविघ्नस्माच्च मे पापं मासंतु परिपंथिनः फलम्। महानवम्यां येतुष्टः कृत्वा दुर्गा महोत्सवम् घटतांश्चरवृतां चापि सर्वाशुभनिवारणाम्॥*॥

**अथ क्रमं समुल्लंघ्य प्रसंगादत्रैव विजयदशमी निर्णीयते॥*॥** साचाश्विन दशमी अपराजिता पूजादौ नवमी ग्राह्या॥ **तदुक्तं पुराणसमुच्चये॥** या पूर्णा नवमी युक्ता तस्यां पूज्याऽपराजिता क्षेमार्थे विजयार्थं च प्रसिद्ध विधिना नृपैः आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नृपः रुद्रयुक्त दशम्यां तु पूजयेन्नापराजिताम् श्रवणयुक्ता चेत्पूर्वा परा वा ग्राह्या कश्यपः। उदये दशमी किंचित्संपूर्णैकादशी यदि

अपराह्णे तदा काले सा तिथिर्विजयाभिधा अपराह्णे तु पूर्णायाः काकुत्स्थः
प्रस्थितो यतः उल्लङ्घयेयुः सीमान्तं तद्दिने सैततो नराः ॥ स्कान्दे ॥ दश-
मीयः समुल्लङ्घ्य प्रस्थानं कुरुते नृपः तस्य संवत्सरं राज्ये न कापि विज-
यो भवेत् । अनेन विजयदशम्यां प्रस्थाननियमो दर्शितः । अपराह्णाभावे
केवलदशम्यामेव प्रस्थानं कार्यम् ॥ तदाह लल्लः ॥ तिथिः शरीरं ति-
थिरेव साधनं तिथिः प्रमाणं तिथिरेव कारणम् । अन्यच्च दशम्यां पूज
यित्वा तु मृन्मयीं चापराजिताम् । कलशीं तोयसंपूर्णां जयंतीपल्लवा
न्विताम् । चतुर्वर्णैस्तथा यात्रा कर्तव्या साधने न च । दशम्यां च बलं राज्ञा
पूजयित्वा पराजिताम् । दशदिक्षु मनो योगाद्यात्रां कृत्वा तु वै नृपः ।
नीराजनं स्वस्य कृत्वा ततो नीराजये द्बलिम् ॥ नीराजनमंत्रश्च
॥ चतुरङ्गबलं मह्यं निरिष्टं वर्जयत्विह । विजयो मम सर्वत्र अस्तु चाग्नि
प्रसादतः दशदिक्ष्विति वचनाद्दिग्विरोधाख्य दोषः सूचितः ॥ पुराण=
समुच्चये ॥ दशम्यां च नरैः सम्यक् पूजनीया पराजिता ऐशानीं दि-
शमाश्रित्य अपराह्णे प्रयत्नतः अथर्वणगोपथब्राह्मणोक्तोऽपराजिता
पूजाविधिर्नगरी सीमान्ते कार्यः तत्रादौ वास्तुपूजा दिक्पालपूजा श-
मीपूजा अमङ्गलानां शमनीं दुःकृतस्य च दुःस्वप्ननाशनीं धन्यां प्रपद्ये
ऽहं शमीं शुभाम् । शरेण शत्रुप्रतिकृतिवेधः चतुर्दिक्षु होमश्च एवं कृते
विजयप्राप्तिः । अथ प्रकृतं क्रममनुसरामः ॥ कार्त्तिकशुक्लाष्टम्यां कू-
र्मपुराणोक्तो गोपूजा गोग्रास गोप्रदक्षिणा गवानुगमनैः सर्वकामावाप्ति
इयं गोष्ठाष्टमीत्युच्यते ॥ मार्गकृष्णाष्टम्यां स्कान्दोक्तं ॥ रुक्मि
ण्यष्टमीव्रतम् सप्त वर्षसाध्यम् प्रथमवर्षे एकमुखे गृहे रुक्मिणीकृष्णप्रद्यु
म्नादि पूजा उपवासः चन्द्रार्घदानानन्तरं भोजनं वा द्वितीयवर्षे द्विमुखं गृहं
एवं प्रत्येकं मुखवृद्धिः सप्तमे वर्षे सप्तमुखे गृहे उद्यापनम् पुत्राद्याप्तिः फलम् ।

पौषशुक्लाष्टमी भविष्योत्तरे॥ बुधवारयुक्ता महाभद्रा तस्या स्नानादि शिवपूजादि शिवप्रीतये भवति इयमेव भरणीयोगाज्जयन्ती त्युच्यते। तस्यां स्नानदानादि कोटिगुणमुक्तम्॥ अथ माघसितपक्षे भीष्माष्टमी सूर्यसेनीये॥ माघेमासि सिताष्टम्यां सलिलं भीष्मवर्मणे। श्राद्धं चैव सदा कुर्युस्ते स्युस्सन्ततिगामिनः श्राद्धं काम्यम्। तर्पणं नित्यम् ब्राह्मणाद्याश्चये वर्णा दद्युर्भीष्मायनो जलम् सम्वत्सरकृतन्तेषां पुण्यं नश्यति सत्तमेति वचनात्॥ तर्पणमंत्रस्तु॥ वैयाघ्रपदगोत्राय शांकृति प्रवराय च। अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे॥ अथ बुधवार संयोगात्सिताष्टम्यां भविष्योत्तरोक्तं बुधाष्टमीव्रतम्॥ बुध पूजा लक्ष्मी पूजा हेमलक्ष्मी सहित जलपूर्णकरकदानम्। पावत्कथासमाप्तिस्ता॥ वस्त्रोजनम् अन्ते बुध प्रतिमा दानम्। अष्टाष्टम्यः कार्या सप्तजन्मा निजाति। स्मरतादिः फलम्॥ अथ फाल्गुनसिताष्टम्यां लक्ष्मी सीतयोः पूजा प्रदोषे सहस्र शोदीपा देयाः ब्राह्मणेभ्यो यदेवान्नं तत्तच्छेषं तत्तज्जातीयमेवावश्यं लक्ष्मी प्रीतिः फलम्। भूताष्टम्यो दिवा भुन्क्त्वा रात्रौ भुन्क्त्वा तु पर्वणि। एकादश्यां दिवा रात्रौ भुन्क्त्वा चान्द्रायणं चरेदिति कालदर्शीय वचनम्। अत्र पर्व पदं चतुर्दश्यष्टमी भिन्नपरम्। यद्वा शुक्लाष्टमी कृष्णा चतुर्दशी च पूर्णा थराकार विसं क्रमश्चेति वाक्ये विशिष्येव शुक्लाष्टमी कृष्णा चतुर्दश्यो। पर्वत्वमुक्तम्। कृष्णाष्टमी शुक्लचतुर्दश्योरपि दिवाभोजन निषेधार्थं पर्वणि त्युन्क्तापि भूताष्टम्योरिति पुनर्वचनं ध्येयम्॥ अथ नवमी निर्णयः॥ साच पूर्व विद्धैव ग्राह्या। युग्म वाक्यात् अष्टमी नवमी विद्धा कर्त्तव्या फलकांक्षिभिः नकुर्यान्नवमीं तात दशम्यां तु कथंचनेति ब्रह्मवैवर्त्ताच्च॥ पाद्मे॥ नवम्येकादशी चैव दशाविद्धा यदा भवेत्। तदा वर्ज्या विशेषेण गंगाभः श्वहतो यथा श्वहतो कुकुरचर्म



